गृहीत्वा मुषलं राजा सकृद्धन्यात् तु तं स्वयम् ।
वधेन शुध्यते स्तेनो ब्राह्मणस्तपसाथवा ॥ ५
स्कन्धेनादाय मुषलं लगुडं वापि खादिरम् ।
शक्तिञ्चादाय तीक्ष्णाग्रामायसं दण्डमेव वा ॥ ६
राजा तेन च गन्तव्यो मुक्तकेशेन धावता ।
आचक्षाणेन तत् पापमेतत्कर्म्मास्मि शाधि माम् ॥ ७
शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते ।
अशासित्वा तु तं राजा स्तेनस्याप्नोति किल्बिषम् ॥ ८
तपसापनोत्तुमिच्छंस्तु सुवर्णस्तेयजं मलम् ।
चीरवासा द्विजोऽरण्ये चरेद्ब्रह्महणो व्रतम् ॥ ९
स्नात्वाश्वमेधावभृथे पूतः स्यादथवा द्विजः ।
प्रदद्याद्वाथ विप्रेभ्यः स्वात्मतुल्यं हिरण्यकम् ॥ १०
चरेद्वा वत्सरं कृच्छ्रं ब्रह्मचर्य्यपरायणः ।
ब्राह्मणः स्वर्णहारी तु तत्पापस्यापनुत्तये ॥ ११
गुरोर्भार्य्यां समारुह्य ब्राह्मणः काममोहितः ।
आलिङ्गयेत् स्त्रियं तप्तां दीप्तां कार्ष्णायसीं कृताम् ॥ १२
स्वयं वा शिश्न-वृषणावुत्कृत्याधाय चाञ्जलौ ।
अभिगच्छेद्दक्षिणाशामा निपातादजिह्मगः ॥ १३
गुर्व्वर्थं वा हतः शुध्येच्चरेद्वा ब्रह्महं व्रतम् ।
शाखां वा कण्टकोपेतां परिष्वज्याथ वत्सरम् ।
अधः शयीत नियतो मुच्यते गुरुतल्पगः ॥ १४
कृच्छ्रं वाब्दं चरेद्विप्रश्चीरवासाः समाहितः ।
अश्वमेधावभृथके स्नात्वा वा शुध्यते द्विजः ॥ १५
कालेऽष्टमे वा भुञ्जानो ब्रह्मचारी सदाव्रती ।
स्थानाशनाभ्यां विहरंस्त्रिरह्नोऽभ्युपयन्नपः ॥ १६
अधःशायी त्रिभिर्वर्षैस्तद्व्यपोहति पातकम् ।
चान्द्रायणानि वा कुर्य्यात् पञ्च चत्वारि वा पुनः ॥ १७
पतितैः सम्प्रयुक्तात्मानामथ वक्ष्यामि निष्कृतिम् ।
पतितेन तु संसर्गं यो येन कुरुते द्विजः ।
स तत्पापापनोदार्थं तस्यैव व्रतमाचरेत् ॥ १८
तप्तकृच्छ्रं चरेद्वाथ संवत्सरमतन्द्रितः ।
षाण्मासिके तु संसर्गे प्रायश्चित्तार्द्धमर्हति ॥ १९
एभिर्व्रतैरपोहन्ति महापातकिनो मलम् ।
पुण्यतीर्थाभिगमनात् पृथिव्यां वाथ निष्कृतिः ॥ २०
ब्रह्महत्यां सुरापानं स्तेयं गुर्व्वङ्गनागमम् ।
कृत्वा तैश्चापि संसर्गं ब्राह्मणः कामचारतः ॥ २१
कुर्य्यादनशनं विप्रः पुण्यतीर्थे समाहितः ।
ज्वलन्तं वा विशेदग्निं ध्यात्वा देवं कपर्द्दिनम् ॥ २२
न ह्यन्या निष्कृतिर्दृष्टा मुनिभिर्धर्म्मवादिभिः ।
तस्मात् पुण्येषु तीर्थेषु दहन् वापि स्वदेहकम् ॥ २३
गत्वा दुहितरं विप्रः स्वसारं वा स्नुषामपि ।
प्रविशेज्ज्वलनं दीप्तं मतिपूर्व्वमिति स्थितिः ॥ २४
मातृष्वसां मातुलानीं तथैव च पितृष्वसाम् ।
भागिनेयीं समारुह्य कुर्य्यात् कृच्छ्रातिकृच्छ्रकम् ॥ २५
चान्द्रायणं वा कुर्व्वीत तस्य पापस्य शान्तये ।
ध्यायन् देवं जगद्योनिमनादिनिधनं हरिम् ॥ २६
भ्रातृभार्य्यां समारुह्य कुर्य्यात् तत्पापशान्तये ।
चान्द्रायणानि चत्वारि पञ्च वा सुसमाहितः ॥ २७
पितृष्वस्रेयीं गत्वा तु स्वस्रीयां मातुरेव च ।
मातुलस्य सुतां वापि गत्वा चान्द्रायणं चरेत् ॥ २८
सखिभार्य्यां समारुह्य गत्वा श्यालीं तथैव च ।
अहोरात्रोषितो भूत्वा तप्तकृच्छ्रं समाचरेत् ॥ २९
उदक्या गमने विप्रस्त्रिरात्रेण विशुध्यति ।
चाण्डालीगमने चैव तप्तकृच्छ्रत्रयं विदुः ।
शुद्धिः सान्तपनेन स्यान्नान्यथा निष्कृतिः स्मृता ॥ ३०
मातृगोत्रां समारुह्य समानप्रवरां तथा ।
चान्द्रायणेन शुध्येत प्रयतात्मा समाहितः ॥ ३१
ब्राह्मणो ब्राह्मणीं गत्वा कृच्छ्रमेकं समाचरेत् ।
कन्यकां दूषयित्वा तु चरेच्चान्द्रायणव्रतम् ॥ ३२
अमानुषीषु पुरुष उदक्यायामयोनिषु ।
रेतः सिक्त्वा जले चैव कृच्छ्रं सान्तपनं चरेत् ॥ ३३
बन्धकीगमने विप्रस्त्रिरात्रेण विशुध्यति ।
गवि मैथुनमासेव्य चरेच्चान्द्रायणव्रतम् ॥ ३४
अजावीमैथुनं कृत्वा प्राजापत्यं चरेद्द्विजः ।
पतितां च स्त्रियं गत्वा त्रिभिः कृच्छ्रैर्विशुध्यति ॥ ३५
पुल्कसीगमने चैव कृच्छ्रं चान्द्रायणं चरेत् ॥ ३६
नटीं शैलूषकीञ्चैव रजकीं वेणुजीविनीम् ।
गत्वा चान्द्रायणं कुर्य्यात् तथा चर्म्मोपजीविनीम् ॥ ३७
ब्रह्मचारी स्त्रियं गच्छेत् कथञ्चित् काममोहितः ।
सप्तागारं चरेद्भैक्षं वसित्वा गर्द्दभाजिनम् ॥ ३८
उपस्पृशेत् त्रिषवणं स्वपापं परिकीर्त्तयन् ।
संवत्सरेण चैकेन तस्मात् पापात् प्रमुच्यते ॥ ३९

ब्रह्महत्याव्रतञ्चापि षण्मासानाचरेद्यती ।
मुच्यते ह्यवकीर्णी तु ब्राह्मणानुमते स्थितः ॥ ४०
सप्तरात्रमकृत्वा तु भैक्षचर्य्याग्निपूजनम् ।
रेतसश्च समुत्सर्गे प्रायश्चित्तं समाचरेत् ॥ ४१
ओङ्कारपूर्व्विकाभिस्तु महाव्याहृतिभिः सदा ।
संवत्सरन्तु यश्नानो नक्तं भिक्षाशनः शुचिः ॥ ४२
सावित्रीञ्च जपेच्चैव नित्यं क्रोधविवर्ज्जितः ।
नदीतीरेषु तीर्थेषु तस्मात् पापाद्विमुच्यते ॥ ४३
हत्वा तु क्षत्रियं विप्रः कुर्य्याद्ब्रह्महणो व्रतम् ।
अकामतो वै षण्मासान् दद्यात् पञ्चशतं गवाम् ॥ ४४
अब्दं चरेद्ध्यानयुतो वनवासी समाहितः ।
प्राजापत्यं सान्तपनं तप्तकृच्छ्रन्तु वा स्वयम् ॥ ४५
प्रमादात् कामतो वैश्यं कुर्य्यात् संवत्सरत्रयम् ।
गोसहस्रन्तु पादन्तु कुर्य्याद्ब्रह्महणो व्रतम् ।
कृच्छ्रातिकृच्छ्रौ वा कुर्य्याच्चान्द्रायणमथापि वा ॥४६
संवत्सरं व्रतं कुर्य्याच्छूद्रं हत्वा प्रमादतः ।
गोसहस्रार्द्धपादञ्च दद्यात् तत्पापशान्तये ॥ ४७
अष्टौ वर्षाणि षट् त्रीणि कुर्य्याद्ब्रह्महणो व्रतम् ।
हत्वा तु क्षत्रियं वैश्यं शूद्राञ्चैव यथाक्रमम् ॥ ४८
निहत्य ब्राह्मणीं विप्रस्त्वष्टवर्षं व्रतं चरेत् ।
राजकन्यां वर्षषट्कं वैश्यां संवत्सरत्रयम् ॥ ४९
संवत्सरेण शुध्येत शूद्रां हत्वा द्विजोत्तमः ।
वैश्यां हत्वा द्विजातिस्तु किञ्चिद्दद्याद्द्विजातये ॥ ५०
अन्त्यजानां वधे चैव कुर्य्याच्चान्द्रायणं व्रतम् ।
पराकेणाथवा शुद्धिरित्याह भगवान् मनुः ॥ ५१
मण्डूकं नकुलं काकं बिडूवराहञ्च मूषकम् ।
श्वानं हत्वा द्विजः कुर्य्यात् षोड़शांशं महाव्रतम् ॥५२
पयः पिबेत् त्रिरात्रन्तु श्वानं हत्वा ह्यतन्द्रितः ।
मार्ज्जारं वाथ नकुलं योजनञ्चाध्वनो व्रजेत् ॥ ५३
कृच्छ्रं द्वादशरात्रन्तु कुर्य्यादश्ववधे द्विजः ।
अर्च्चां कार्ष्णायसीं दद्यात् सर्पं हत्वा द्विजोत्तमः ॥५४
पलालभारकं षण्ढे सीसकञ्चैकमाषकम् ।
घृतकुम्भं वराहे तु तिलद्रोणन्तु तित्तिरे ॥ ५५
शुके द्विहायनं वत्सं क्रौञ्चं हत्वा त्रिहायनम् ।
हत्वा हंसं बलाकाञ्च बकं बर्हिणमेव च ॥ ५६
वानरं श्येन-भासौ च स्पर्शयेद्ब्राह्मणाय गाम् ।
क्रव्यादांस्तु मृगान् हत्वा धेनुं दद्यात् पयस्विनीम् ॥५७
अक्रव्यादान् वत्सतरीमुष्ट्रं हत्वा तु कृष्णलम् ।
किञ्चिद्देव तु विप्राय दद्यादस्थिमतां वधे ॥ ५८
अनस्थाञ्चैव हिंसायां प्राणायामेन शुध्यति ।
फलदानान्तु वृक्षाणां छेदने जप्यमृक्शतम् ॥ ५९
गुल्म-वल्ली-लतानान्तु पुष्पितानाञ्च वीरुधाम् ।
अन्येषाञ्चैव वृक्षाणां सरसानाञ्च सर्व्वशः ॥ ६०
फलपुष्पोद्भवानाञ्च घृतप्राशो विशोधनम् ।
हस्तिनाञ्च वधे दृष्टं तप्तकृच्छ्रं विशोधनम् ॥ ६१
चान्द्रायणं पराकं वा गां हत्वा तु प्रमादतः ।
मतिपूर्व्ववधे चास्याः प्रायश्चित्तं न विद्यते ॥ ६२

इति श्रीकौर्म्मे महापुराणे उपरिभागे
ब्रह्मविद्यायां प्रायश्चित्तनियमे
द्वात्रिंशोऽध्यायः ॥३२॥

---

## त्रयस्त्रिंशोऽध्यायः ।

व्यास उवाच ।

मनुष्याणान्तु हरणं कृत्वा स्त्रीणां गृहस्य च ।
वापी-कूपजलानाञ्च शुध्येच्चान्द्रायणेन तु ॥ १
द्रव्याणामल्पसाराणां स्तेयं कृत्वान्यवेश्मनः ।
चरेत् सान्तपनं कृच्छ्रं तन्निर्य्यात्यात्मशुद्धये ॥ २
धान्यान्नधनचौर्य्यन्तु कृत्वा कामाद्द्विजोत्तमः ।
स्वजातीयगृहादेव कृच्छ्रार्द्धेन विशुध्यति ॥ ३
भक्ष्य-भोज्योपहरणे यानशय्यासनस्य च ।
पुष्प-मूल-फलानाञ्च पञ्चगव्यं विशोधनम् ॥ ४
तृण-काष्ठ-द्रुमाणाञ्च शुष्कान्नस्य गुड़स्य च ।
चैल-चर्म्मामिषाणाञ्च त्रिरात्रं स्यादभोजनम् ॥ ५
मणि-मुक्ता-प्रवालानां ताम्रस्य रजतस्य च ।
अयःकांस्योपलानाञ्च द्वादशाहं कणादनम् ॥ ६
कार्पासकीटजोर्णानां द्विशफैकशफस्य च ।
पुष्पगन्धौषधीनाञ्च पिबेच्चैव त्र्यहं पयः ॥ ७
नरमांसाशनं कृत्वा चान्द्रायणमथाचरेत् ।
काकञ्चैव तथा श्वानं जग्ध्वा हस्तिनमेव वा ।
वराहं कुक्कुटं वाथ तप्तकृच्छ्रेण शुध्यति ॥ ८
क्रव्यादानाञ्च मांसानि पुरीषं मूत्रमेव वा ।

गो-गोमायु-कपीनाञ्च तदेव व्रतमाचरेत्।
उपोष्य द्वादशाहञ्च कुष्माण्डैर्जुहुयाद्घृतम् ॥ ९
नकुलोलूक-मार्ज्जारान् जग्ध्वा सान्तपनं चरेत् ॥ १०
श्वापदोष्ट्र-खरान् जग्ध्वा तप्तकृच्छ्रेण शुध्यति।
प्रकुर्य्याच्चैव संस्कारं पूर्व्वेण विधिनैव तु ॥ ११
वकञ्चैव बलाकाञ्च हंसं कारण्डवं तथा।
चक्रवाकपलं जग्ध्वा द्वादशाहमभोजनम् ॥ १२
कपोतं टिट्टिभाञ्चैव शुकं सारसमेव च।
उलूकं जालपादञ्च जग्ध्वाप्येतद्व्रतं चरेत् ॥ १३
शिशुमारं तथा चाषं मत्स्यमांसं तथैव च।
जग्ध्वा चैव कटाहारमेतदेव व्रतं चरेत् ॥ १४
कोकिलञ्चैव मत्स्यादान् मण्डूकं भुजगं तथा।
गोमूत्रयावकाहारो मासेनैकेन शुध्यति ॥ १५
जलेचरांश्च जलजान् प्रणुदानथ विष्किरान्।
रक्तपादांस्तथा जग्ध्वा सप्ताहञ्चैतदाचरेत् ॥ १६
शुनो मांसं शुष्कमांसमात्मार्थञ्च तथा कृतम्।
भुक्त्वा मासं चरेदेतत् तत्पापस्यापनुत्तये ॥ १७
वार्त्ताकं मूलकं शिग्रुं कुटकं चटकं तथा।
प्राजापत्यं चरेज्जग्ध्वा शङ्खं कुम्भीकमेव वा ॥ १८
पलाण्डुं लशुनञ्चैव भुक्त्वा चान्द्रायणं चरेत्।
नालिकां तण्डुलीयञ्च प्राजापत्येन शुध्यति ॥ १९
अश्मान्तकं तथा पातं तप्तकृच्छ्रेण शुध्यति।
प्राजापत्येन शुद्धिः स्यात् कुसुम्भस्य च भक्षणे ॥ २०
अलाबुं किंशुकञ्चैव भुक्त्वाप्येतद्व्रतं चरेत्।
उदुम्बरञ्च कामेन तप्तकृच्छ्रेण शुध्यति ॥ २१
वृथाकृसर-संयाव-पायसापूपसङ्कुलम्।
भुक्त्वा चैवंविधन्त्वन्यत् त्रिरात्रेण विशुध्यति ॥ २२
पीत्वा क्षीराण्यपेयानि ब्रह्मचारी समाहितः।
गोमूत्रयावकाहारो मासेनैकेन शुध्यति ॥ २३
अनिर्द्दशाहं गोक्षीरं माहिषञ्चाजमेव च।
सन्धिन्याश्च विवत्सायाः पिबन् क्षीरमिदं चरेत् ॥ २४
एतेषाञ्च विकाराणि पीत्वा मोहेन मानवः।
गोमूत्रयावकाहारः सप्तरात्रेण शुध्यति ॥ २५
भुक्त्वा चैव नवश्राद्धे मृतके सूतके तथा।
चान्द्रायणेन शुध्येत ब्राह्मणः सुसमाहितः ॥ २६
यस्याग्नौ हूयते नित्यमन्नस्याग्रं न दीयते।
चान्द्रायणं चरेत् सम्यक् तस्यान्नप्राशने द्विजः ॥ २७
अभोज्यानान्तु सर्व्वेषां भुक्त्वा चान्नमुपस्कृतम्।
अन्त्यावसायिनाञ्चैव तप्तकृच्छ्रेण शुध्यति ॥ २८
चण्डालान्नं द्विजो भुक्त्वा सम्यक् चान्द्रायणं चरेत्।
बुद्धिपूर्व्वन्तु कृच्छ्राब्दं पुनः संस्कारमेव च ॥ २९
असुरामद्यपानेन कुर्य्याच्चान्द्रायणव्रतम्।
अभोज्यान्नन्तु भुक्त्वा तु प्राजापत्येन शुध्यति ॥ ३०
विण्मूत्रप्राशनं कृत्वा रेतसश्चैतदाचरेत्।
अनादिष्टे तु चैकाहं सर्व्वत्र तु यथार्थतः ॥ ३१
विड्वराह-खरोष्ट्राणां गोमायोः कपि-काकयोः
प्राश्य मूत्र-पुरीषाणि द्विजश्चान्द्रायणं चरेत् ॥ ३२
अज्ञानात् प्राश्य विण्मूत्रं सुरासंसृष्टमेव च।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ ३३
क्रव्यादां पक्षिणाञ्चैव प्राश्य पुरीषकम्।
महासान्तपनं मोहात् तथा कुर्य्याद्द्विजोत्तमः ॥ ३४
भास-मण्डूक-कुररे विष्किरे कृच्छ्रमाचरेत्।
प्राजापत्येन शुध्येत ब्राह्मणोच्छिष्टभोजने ॥ ३५
क्षत्त्रिये तप्तकृच्छ्रं स्याद्वैश्ये चैवातिकृच्छ्रकम्।
शूद्रोच्छिष्टं द्विजो भुक्त्वा कुर्य्याच्चान्द्रायणव्रतम् ॥ ३६
सुराया भाण्डके वारि पीत्वा चान्द्रायणं चरेत्।
समुच्छिष्टं द्विजो भुक्त्वा त्रिरात्रेण विशुध्यति।
गोमूत्रयावकाहारः पीतशेषञ्च वा गवाम् ॥ ३७
अपो मूत्रपुरीषाद्यैर्दूषिताः प्राशयेद्यदि।
तदा सान्तपनं कृच्छ्रं व्रतं पापविशोधनम् ॥ ३८
चाण्डालकूप-भाण्डेषु यदि ज्ञानात् पिबेज्जलम्।
चरेत् सान्तपनं कृच्छ्रं ब्राह्मणः पापशोधनम् ॥ ३९
चण्डालेन तु संस्पृष्टं पीत्वा वारि द्विजोत्तमः।
त्रिरात्रव्रतसुक्तेन पञ्चगव्येन शुध्यति ॥ ४०
महापातकिसंस्पर्शे भुक्त्वा स्नात्वा द्विजो यदि।
बुद्धिपूर्व्वन्तु मूढात्मा तप्तकृच्छ्रं समाचरेत् ॥ ४१
स्पृष्ट्वा महापातकिनं चण्डालं वा रजस्वलाम्।
प्रमादाद्भोजनं कृत्वा त्रिरात्रेण विशुध्यति ॥ ४२
स्नानार्हो यदि भुञ्जीत अहोरात्रेण शुध्यति।
बुद्धिपूर्व्वन्तु कृच्छ्रेण भगवानाह पद्मजः ॥ ४३
भुक्त्वा पर्य्युषितादीनि गवादिप्रतिदूषिताम्।
भुक्त्वोपवासं कुर्व्वीत कृच्छ्रपादमथापि वा ॥ ४४

संवत्सरान्ते कृच्छ्रन्तु चरेद्विप्रः पुनःपुनः ।
अज्ञानभुक्तशुद्ध्यर्थं ज्ञातस्य तु विशेषतः ॥ ४५
व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म्म च ।
अभिचारमहीनञ्च त्रिभिः कृच्छ्रैर्विशुध्यति ॥ ४६
ब्राह्मणादिहतानान्तु कृत्वा दाहादिकं द्विजः ।
गोमूत्रयावकाहारः प्राजापत्येन शुध्यति ॥ ४७
तलाभ्यक्तोऽथ वान्तो वा कुर्य्यान्मूत्र-पुरीषके ।
अहोरात्रेण शुध्येत श्मश्रुकर्म्मणि मैथुने ॥ ४८
एकाहेन विवाहाग्निं परिहार्य्य द्विजोत्तमः ।
त्रिरात्रेण विशुध्येत त्रिरात्रात् षड़हः परम् ॥ ४९
दशाहं द्वादशाहं वा परिहार्य्य प्रमादतः ।
कृच्छ्रं चान्द्रायणं कुर्य्यात् तत्पापस्योपशान्तये ॥५०
पतिताद्द्रव्यमादाय तदुत्सर्गेण शुध्यति ।
चरेच्च विधिना कृच्छ्रमित्याह भगवान् मनुः ॥ ५१
अनाशकान्निवृत्तास्तु प्रव्रज्यावसितास्तथा ।
चरेयुस्त्रीणि कृच्छ्राणि त्रीणि चन्द्रायणानि च ॥५२
पुनश्च जातकर्म्मादिसंस्कारैः संस्कृता द्विजाः ।
शुध्येयुस्तद्व्रतं सम्यक् चरेयुर्धर्म्मदर्शिनः ॥ ५३
अनुपासितसन्ध्यस्तु तदहर्जापको वसेत् ।
अनश्नन् संयतमना रात्रौ चेद्रात्रिमेव हि ॥ ५४
अकृत्वा समिदाधानं शुचिः स्नात्वा समाहितः ।
गायत्र्यष्टसहस्रस्य जप्यं कुर्य्याद्विशुद्धये ॥ ५५
उपवासी चरेत् सन्ध्यां गृहस्थो हि प्रमादतः ।
स्नात्वा विशुध्यते सद्यः परिश्रान्तश्च संयमात् ॥ ५६
वेदोदितानि नित्यानि कर्म्माणि च विलोप्य तु ।
स्नातको व्रतलोपन्तु कृत्वा चोपवसेद्दिनम् ॥ ५७
संवत्सरं चरेत् कृच्छ्रमग्न्युत्सादी द्विजोत्तमः ।
चान्द्रायणं चरेद्व्रात्यो गोप्रदानेन शुध्यति ॥ ५८
नास्तिक्यं यदि कुर्व्वीत प्राजापत्यं चरेद्द्विजः ।
देवद्रोहं गुरुद्रोहं तप्तकृच्छ्रेण शुध्यति ॥ ५९
उष्ट्रान्नकालता मासं संहिताजप एव च ।
होमाश्च शाकला नित्यमपाङ्क्तानां विशोधनम् ॥ ६०
नीलं रक्तं वसित्वा च ब्राह्मणो वस्त्रमेव हि ।
अहोरात्रोषितः स्नातः पञ्चगव्येन शुध्यति ॥ ६१
उष्ट्रयानं समारुह्य खरयानञ्च कामतः ।
त्रिरात्रेण विशुध्येत्तु नग्नो वा प्रविशेज्जलम् ॥ ६२
वेदधर्म्मपुराणानां चण्डालस्य तु भाषणे ।
चान्द्रायणेन शुद्धिः स्यान्न ह्यन्या तस्य निष्कृतिः॥६३
उद्बन्धनादिनिहतं संस्पृश्य ब्राह्मणः क्वचित् ।
चान्द्रायणेन शुद्धिः स्यात् प्राजापत्येन वा पुनः ॥६४
उच्छिष्टो यद्यनाचान्तश्चाण्डालादीन् स्पृशेद्द्विजः ।
प्रमादाद्वै जपेत् स्नात्वा गायत्र्यष्टसहस्रकम् ॥ ६५
द्रुपदानां शतं वापि ब्रह्मचारी समाहितः ।
त्रिरात्रोपोषितः सम्यक् पञ्चगव्येन शुध्यति ॥ ६६
चाण्डालपतितादींश्च कामाद्यः संस्पृशेद्द्विजः ।
उच्छिष्टस्तत्र कुर्व्वीत प्राजापत्यं विशुद्धये ॥ ६७
चाण्डाल-सूतकि-शवांस्तथा नारीं रजस्वलाम् ।
स्पृष्ट्वा स्नायाद्विशुद्ध्यर्थं प्राह देवः पितामहः ॥६८
चाण्डाल-सूतकि-शवैः संस्पृष्टं संस्पृशेद्यदि ।
ततः स्नात्वाथ आचम्य जपं कुर्य्यात् समाहितः ॥६९
तत्स्पृष्टस्पर्शिनं स्पृष्ट्वा बुद्धिपूर्व्वं द्विजोत्तमः ।
स्नात्वाचामेद्विशुद्ध्यर्थं प्राह देवः पितामहः ॥ ७०
भुञ्जानस्य तु विप्रस्य कदाचित् संस्रवेद्गुदम् ।
कृत्वा शौचं ततः स्नायादुपोष्य जुहुयाद्घृतम् ॥७१
चाण्डालन्तु शवं स्पृष्ट्वा कृच्छ्रं कृत्वा विशुध्यति ।
दृष्ट्वाऽभ्यक्तस्त्वसंस्पृश्य अहोरात्रेण शुध्यति ॥ ७२
सुरां स्पृष्ट्वा द्विजः कुर्य्यात् प्राणायामत्रयं शुचिः ।
पलाण्डुं लशुनञ्चैव घृतं प्राश्य ततः शुचिः ॥ ७३
ब्राह्मणस्तु शुना दष्टस्त्र्यहं सायं पयः पिबेत् ।
नाभेरूर्द्ध्वन्तु दष्टस्य तदेव द्विगुणं भवेत् ॥ ७४
स्यादेतत् त्रिगुणं बाह्वोर्मूर्द्ध्नि च स्याच्चतुर्गुणम् ।
स्नात्वा जपेद्वा सावित्रीं श्वभिर्दष्टो द्विजोत्तमः ॥७५
अनिर्व्वर्त्त्य महायज्ञान् यो भुङ्क्ते तु द्विजोत्तमः ।
अनातुरः सति धने कृच्छ्रार्द्धेन विशुध्यति ॥ ७६
आहिताग्निरुपस्थानं न कुर्य्याद्यस्तु पर्व्वणि ।
ऋतौ न गच्छेद्भार्य्यां वा सोऽपि कृच्छ्रार्द्धमाचरेत्७७
विनाद्भिरप्सु नाप्यार्त्तशरीरं सन्निवेश्य च ।
सचेलो जलमाप्लुत्य गामालभ्य विशुध्यति ॥ ७८
बुद्धिपूर्व्वन्त्वभ्युदिते जपेदन्तर्ज्जले द्विजः ।
गायत्र्यष्टसहस्रन्तु त्र्यहञ्चोपवसेद्व्रती ॥ ७९
अनुगम्येच्छया शूद्रं प्रेतीभूतं द्विजोत्तमः ।
गायत्र्यष्टसहस्रञ्च जपं कुर्य्यान्नदीषु च ॥ ८०

कृत्वा तु यपथान् विप्रो विप्रस्यावधिसंयुतम्।
स चैव यावकान्नेन कुर्य्याच्चान्द्रायणं व्रतम् ॥ ८१
पङ्क्तौ विषमदानन्तु कृत्वा कृच्छ्रेण शुध्यति।
छायां श्वपाकस्यारुह्य स्नात्वा सम्प्राशयेद्घृतम्॥८२
ईक्षेदादित्यमशुचिर्दृष्ट्वा म्लेच्छान्नमेव वा।
मानुषञ्चास्थि संस्पृश्य स्नानं कृत्वा विशुध्यति ॥ ८३
कृत्वा तु मिथ्याध्ययनं चरेद्भैक्षन्तु वत्सरम्।
कृतघ्नो ब्राह्मणगृहे पञ्चसंवत्सरव्रती ॥ ८४
हुङ्कारं ब्राह्मणस्योक्त्वा त्वङ्कारञ्च गरीयसः।
स्नात्वा नाश्नन्नहःशेषं प्रणिपत्य प्रसादयेत् ॥ ८५
ताड़यित्वा तृणेनापि कण्ठे बद्धाथ वाससा।
विवादे चापि निर्ज्जित्य प्रणिपत्य प्रसादयेत् ॥ ८६
अवगूर्य्य चरेत् कृच्छ्रमतिकृच्छ्रं निपातने।
कृच्छ्रातिकृच्छ्रौ कुर्व्वीत विप्रस्योत्पाद्य शोणितम्॥८७
गुरोराक्रोशमनृतं कृत्वा कुर्य्याद्विशोधनम्।
एकरात्रं निराहारस्तत्पापस्यापनुत्तये ॥ ८८
देवर्षीणामभिमुखं ष्ठीवनाक्रोशने कृते।
उल्कया च दहेज्जिह्वां दातव्यञ्च हिरण्यकम् ॥ ८९
देवोद्यानेषु यः कुर्य्यान्मूत्रोच्चारं सकृद्द्विजः।
छिन्द्याच्छिश्नं विशुद्ध्यर्थं चरेच्चान्द्रायणं व्रतम् ॥ ९०
देवतायतने मूत्रं कृत्वा मोहाद्द्विजोत्तमः।
शिश्नस्योत्कर्त्तनं कृत्वा चान्द्रायणमथाचरेत् ॥ ९१
देवतानामृषीणाञ्च देवानाञ्चैव कुत्सनम्।
कृत्वा सम्यक् प्रकुर्व्वीत प्राजापत्यं द्विजोत्तमः ॥ ९२
तैस्तु सम्भाषणं कृत्वा स्नात्वा देवं समर्चयेत्।
दृष्ट्वा वीक्षेत भास्वन्तं स्मृत्वा विश्वेश्वरं स्मरेत् ॥९३
यः सर्व्वभूताधिपतिं विश्वेशानं विनिन्दति।
न तस्य निष्कृतिः शक्या कर्त्तुं वर्षशतैरपि ॥ ९४
चान्द्रायणं चरेत् पूर्व्वं कृच्छ्रञ्चैवातिकृच्छ्रकम्।
प्रपन्नः शरणं देवं तस्मात् पापाद्विमुच्यते ॥ ९५
सर्व्वस्वदानं विधिवत् पातकानां विशोधनम्।
चान्द्रायणञ्च विधिना कृच्छ्रञ्चैवाति कृच्छ्रकम् ॥ ९६
पुण्यक्षेत्राभिगमनं सर्व्वपापविनाशनम्।
देवताभ्यर्चनं नृणामशेषाघविनाशनम् ॥ ९७
अमावास्यां तिथिं प्राप्य यः समाराधयेद्भवम्।
ब्राह्मणान् पूजयित्वा तु सर्व्वपापैः प्रमुच्यते ॥ ९८

कृष्णाष्टम्यां महादेवौं तथा कृष्णचतुर्द्दशीम्।
सम्पूज्य ब्राह्मणमुखे सर्व्वपापैः प्रमुच्यते ॥ ९९
त्रयोदश्यां तथा रात्रौ सोपहारं त्रिलोचनम्।
दृष्ट्वेशं प्रथमे यामे मुच्यते सर्व्वपातकैः ॥ १००
उपोषितश्चतुर्द्दश्यां कृष्णपक्षे समाहितः।
यमाय धर्म्मराजाय मृत्यवे चान्तकाय च।
वैवस्वताय कालाय सर्व्वपापक्षयाय च ॥ १०१
प्रत्येकं तिलसंयुक्तान् दद्यात् सप्तोदकाञ्जलीन्।
स्नात्वा दद्याच्च पूर्व्वाह्णे मुच्यते सर्व्वपातकैः ॥ १०२
ब्रह्मचर्य्यमधःशय्या उपवासो द्विजार्च्चनम्।
व्रतेष्वेतेषु कुर्व्वीत शान्तः संयतमानसः ॥ १०३
अमावास्यायां ब्रह्माणं समुद्दिश्य पितामहम्।
ब्राह्मणांस्त्रीन् समभ्यर्च्च्य मुच्यते सर्व्वपातकैः ॥१०४
षष्ठ्यामुपोषितो देवं शुक्लपक्षे समाहितः।
सप्तम्यामर्च्चयेद्भानं मुच्यते सर्व्वपातकैः ॥ १०५
भरण्याञ्च चतुर्थ्याञ्च शनैश्चरदिने यमम्।
पूजयेत् सप्तजन्मोत्थैर्मुच्यते सर्व्वपातकैः ॥ १०६
एकादश्यां निराहारः समभ्यर्च्च्य जनार्द्दनम्।
द्वादश्यां शुक्लपक्षस्य महापापैः प्रमुच्यते ॥ १०७
तपो जपस्तीर्थसेवा देव-ब्राह्मणपूजनम्।
ग्रहणादिषु कालेषु महापातकशोधनम् ॥ १०८
यः सर्व्वपापयुक्तोऽपि पुण्यतीर्थेषु मानवः।
नियमेन त्यजेत् प्राणान् मुच्यते सर्व्वपातकैः ॥१०९
ब्रह्मघ्नं वा कृतघ्नं वा महापातकदूषितम्।
भर्त्तारमुद्धरेन्नारी प्रविष्टा सह पावकम् ॥ ११०
एतदेव परं स्त्रीणां प्रायश्चित्तं विदुर्बुधाः।
सर्व्वपापसमुद्भूतो नात्र कार्य्या विचारणा ॥ १११
पतिव्रता तु या नारी भर्त्तृशुश्रूषणे रता।
न तस्या विद्यते पापमिह लोके परत्र च ॥ ११२
पतिव्रता धर्म्मरता भद्राण्येव न संशयः।
नास्याः पराभवं कर्त्तुं शक्नोतीह जनः क्वचित् ॥११३
यथा रामस्य सुभगा सीता त्रैलोक्यविश्रुता।
पत्नी दाशरथेर्देवी विजिग्ये राक्षसेश्वरम् ॥ ११४
रामस्य भार्य्यां सुभगां रावणो राक्षसेश्वरः।
सीतां विशालनयनां चकमे कालनोदितः ॥ ११५
गृहीत्वा मायया वेषं चरन्तीं विजने वने।

समाहर्त्तुं मतिं चक्रे तापसः किल भाविनीम्॥ ११६
विज्ञाय सा च तद्भावं स्मृत्वा दाशरथिं पतिम्।
जगाम शरणं वह्निमावसथ्यं शुचिस्मिता॥ ११७
उपतस्थे महायोगं सर्व्वलोकविदाहकम्।
कृताञ्जलिं रामपत्नी साक्षात् पतिमिवाच्युतम्॥११८
नमस्यामि महायोगं कृशानुं गह्वरं परम्।
दाहकं सर्व्वभूतानामीशानं कालरूपिणम्॥ ११९
नमस्ये पावकं देवं साक्षिणं विश्वतोमुखम्।
आत्मानं दीप्तवपुषं सर्व्वभूतहृदि स्थितम्॥ १२०
प्रपद्ये शरणं वह्निं ब्रह्मण्यं ब्रह्मरूपिणम्।
योगिनं कृत्तिवसनं भूतेशं परमं पदम्॥ १२१
तं प्रपद्ये जगन्मूर्त्तिं प्रभवं सर्व्वतेजसाम्।
महायोगीश्वरं वह्निमादित्यं परमेष्ठिनम्॥ १२२
प्रपद्ये शरणं रुद्रं महाग्रासं त्रिशूलिनम्।
कालाग्निं योगिनामीशं भोग-मोक्षफलप्रदम्॥१२३
प्रपद्ये त्वां विरूपाक्षं भूर्भुवःस्वःस्वरूपिणम्।
हिरण्मये गृहे गुप्तं महान्तममितौजसम्॥ १२४
वैश्वानरं प्रपद्येऽहं सर्व्वभूतेष्ववस्थितम्।
हव्य-कव्यवहं देवं प्रपद्ये वह्निमीश्वरम्॥ १२५
प्रपद्ये तत् परं तत्त्वं वरेण्यं सवितुः शिवम्।
भर्गमग्निं परंज्योती रक्ष मां हव्यवाहन॥ १२६
इति वह्न्यष्टकं जप्त्वा रामपत्नी यशस्विनी।
ध्यायन्ती मनसा तस्थौ राममुन्मीलितेक्षणा॥ १२७
अथावसथ्याद्भगवान् हव्यवाहो महेश्वरः।
आविरासीत् सुदीप्तात्मा तेजसा निर्द्दहन्निव॥ १२८
सृष्ट्वा मायामयीं सीतां स रावणवधेच्छया।
सीतामादाय रामेष्टां पावकोऽन्तरधीयत॥ १२९
तां दृष्ट्वा तादृशीं सीतां रावणो राक्षसेश्वरः।
समादाय ययौ लङ्कां सागरान्तरसंस्थिताम्॥१३०
कृत्वाथ रावणवधं रामो लक्ष्मणसंयुतः।
समादायाभवत् सीतां शङ्काकुलितमानसः॥ १३१
सा प्रत्ययाय भूतानां सीता मायामयी पुनः।
विवेश पावकं दीप्तं ददाह ज्वलनोऽपि ताम्॥१३२
दग्ध्वा मायामयीं सीतां भगवानुग्रदीधितिः।
रामायादर्शयत् सीतां पावकोऽभूत् सुरप्रियः॥ १३३
प्रगृह्य भर्त्तुश्चरणौ कराभ्यां सा सुमध्यमा।
चकार प्रणतिं भूमौ रामाय जनकात्मजा॥ १३४
दृष्ट्वा हृष्टमना रामो विस्मयाकुललोचनः।
ननाम वह्निं शिरसा तोषयामास राघवः॥ १३५
उवाच वह्निं भगवन् किमेषा वीरवर्णिनि।
दग्धा भगवता पूर्व्वं दृष्टा मत्पार्श्वमागता॥ १३६
तमाह देवो लोकानां दाहको हव्यवाहनः।
यथावृत्तं दाशरथिं भूतानामेव सन्निधौ॥ १३७
इयं सा मिथिलेशेन पार्व्वतीं रुद्रवल्लभाम्।
आराध्य लब्धा तपसा देव्याश्चात्यन्तवल्लभा॥ १३८
भर्त्तुः शुश्रूषणोपेता सुशीलेयं पतिव्रता।
भवानीपार्श्वमानीता मया रावणकाम्यिता॥ १३९
या नीता राक्षसेशेन सीता सा भस्मतां गता।
मया मायामयी सृष्टा रावणस्य वधाय सा॥ १४०
यदर्थं भवता दृष्टो रावणो राक्षसेश्वरः।
मायोपसंहृता चैव हतो लोकविनाशनः॥ १४१
गृहाण विमलामेनां जानकीं वचनान्मम।
पश्य नारायणं देवं स्वात्मानं प्रभवाव्ययम्॥ १४२
इत्युक्त्वा भगवांश्चण्डो विश्वार्च्चिर्विश्वतोमुखः।
मानितो राघवेणाग्निर्भूतैश्चान्तरधीयत॥ १४३
एतत् पतिव्रतानां वै माहात्म्यं कथितं मया।
स्त्रीणां सर्व्वाघशमनं प्रायश्चित्तमिदं स्मृतम्॥ १४४
अशेषपापसंयुक्तः पुरुषोऽपि सुसंयतः।
स्वदेहं पुण्यतीर्थेषु त्यक्त्वा मुच्येत किल्बिषात्॥ १४५
पृथिव्यां सर्व्वतीर्थेषु स्नात्वा पुण्येषु वा द्विजः।
मुच्यते पातकैः सर्व्वैः सञ्चितैरपि पूरुषः॥ १४६
इत्येष मानवो धर्म्मो युष्माकं कथितो मया।
महेशाराधनार्थाय ज्ञानयोगश्च शाश्वतः॥ १४७
योऽनेन विधिना युक्तं ज्ञानयोगं समाचरेत्।
स पश्यति महादेवं नान्यः कल्पशतैरपि॥ १४८
स्थापयेद्यः परं धर्म्मं ज्ञानं तत् पारमेश्वरम्।
न तस्मादधिको लोके स योगी परमो मतः॥ १४९
यः संस्थापयितुं शक्तो न कुर्य्यान्मोहितो जनः।
स योगयुक्तोऽपि मुनिर्नात्यर्थं भगवत्प्रियः॥ १५०
तस्मात् सदैव दातव्यं ब्राह्मणेषु विशेषतः।
धर्म्मयुक्तेषु शान्तेषु श्रद्धया चान्वितेषु वै॥ १५१
यः पठेद्भवतां नित्यं संवादं मम चैव हि।

सर्व्वपापविनिर्मुक्तो गच्छेत परमां गतिम् ॥ १५२
श्राद्धे वा दैविके कार्य्ये ब्राह्मणानाञ्च सन्निधौ।
पठेत नित्यं सुमनाः श्रोतव्यञ्च द्विजातिभिः ॥ १५३
योऽर्थं विचार्य्य युक्तात्मा श्रावयेद्वा द्विजान् शुचीन्।
स दोषकञ्चुकं त्यक्त्वा याति दिव्यं महेश्वरम् ॥ १५४
एतावदुक्त्वा भगवान् व्यासः सत्यवतीसुतः।
समाश्वास्य मुनीन् सूतं जगाम च यथागतम् ॥१५५

इति श्रीकौर्म्मे महापुराणे उपरिभागे ब्रह्मविद्यायां प्रायश्चित्तविवेको नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

## चतुस्त्रिंशोऽध्यायः।

ऋषय ऊचुः।

तीर्थानि यानि लोकेऽस्मिन् विश्रुतानि महान्त्यपि।
तानि त्वं कथयास्माकं रोमहर्षण साम्प्रतम् ॥ १

रोमहर्षण उवाच।

शृणुध्वं कथयिष्येऽहं तीर्थानि विविधानि च।
कथितानि पुराणेषु मुनिभिर्ब्रह्मवादिभिः ॥ २
यत्र स्नानं जपो होमः श्राद्ध-दानादिकं कृतम्।
एकैकशो मुनिश्रेष्ठाः पुनात्यासप्तमं कुलम् ॥ ३
पञ्चयोजनविस्तीर्णं ब्रह्मणः परमेष्ठिनः।
प्रयागं प्रथितं तीर्थं यस्य माहात्म्यमीरितम् ॥ ४
अन्यच्च तीर्थप्रवरं कुरूणां देववन्दितम्।
ऋषीणामाश्रमैर्जुष्टं सर्व्वपापविशोधनम् ॥ ५
तत्र स्नात्वा विशुद्धात्मा दम्भ-मात्सर्य्यवर्ज्जितः।
ददाति यत् किञ्चिदपि पुनात्युभयतः कुलम् ॥ ६
परं गुह्यं गयातीर्थं पितॄणाञ्चातिदुर्लभम्।
कृत्वा पिण्डप्रदानन्तु न भूयो जायते नरः ॥ ७
सकृद्गयाभिगमनं कृत्वा पिण्डं ददाति यः।
तारिताः पितरस्तेन यास्यन्ति परमां गतिम् ॥ ८
तत्र लोकहितार्थाय रुद्रेण परमात्मना।
शिलातले पदं न्यस्तं तत्र पितॄन् प्रसादयेत् ॥ ९
गयाभिगमनं कर्त्तुं यः शक्तो नाभिगच्छति।
शोचन्ति पितरस्तं वै वृथा तस्य परिश्रमः ॥ १०
गायन्ति पितरो गाथाः कीर्त्तयन्ति महर्षयः।
गयां यास्यति यः कश्चित्सोऽस्मान् सन्तारयिष्यति ११
यदि स्यात् पातकोपेतः स्वधर्म्मपरिवर्ज्जितः।
गयां यास्यति वंशोत्थः सोऽस्मान् सन्तारयिष्यति १२
एष्टव्या बहवः पुत्त्राः शीलवन्तो गुणान्विताः।
तेषान्तु समवेतानां यद्येकोऽपि गयां व्रजेत् ॥ १३
तस्मात् सर्व्वप्रयत्नेन ब्राह्मणस्तु विशेषतः।
प्रदद्याद्विधिवत् पिण्डान् गयां गत्वा समाहितः॥१४
धन्यास्तु खलु ते मर्त्त्या गयायां पिण्डदायिनः।
कुलान्युभयतः सप्त समुद्धृत्याप्नुयुः परम् ॥ १५
अन्यच्च तीर्थप्रवरं सिद्धावासमुदाहृतम्।
प्रभासमिति विख्यातं यत्रास्ते भगवान् भवः ॥ १६
तत्र स्नानं ततः श्राद्धं ब्राह्मणानाञ्च पूजनम्।
कृत्वा लोकमवाप्नोति ब्रह्मणोऽक्षयमुत्तमम् ॥ १७
तीर्थं त्र्यम्बकं नाम सर्व्वदेवनमस्कृतम्।
पूजयित्वा तत्र रुद्रं ज्योतिष्टोमफलं लभेत् ॥ १८
सुपर्णाख्यं महादेवं समभ्यर्च्य कपर्द्दिनम्।
ब्राह्मणान् पूजयित्वा च गाणपत्यं लभेद्ध्रुवम् ॥ १९
सोमेश्वरं तीर्थवरं रुद्रस्य परमेष्ठिनः।
सर्व्वव्याधिहरं पुण्यं रुद्रसालोक्यकारणम् ॥ २०
तीर्थानां परमं तीर्थं विजयं नाम शोभनम्।
तत्र लिङ्गं महेशस्य विजयं नाम विश्रुतम् ॥ २१
षण्मासनियताहारो ब्रह्मचारी समाहितः।
उषित्वा तत्र विप्रेन्द्रा प्रयान्ति परमं पदम् ॥ २२
अन्यच्च तीर्थप्रवरं पूर्व्वदेशेषु शोभनम्।
एकाम्रं देवदेवस्य गाणपत्यफलप्रदम् ॥ २३
दत्त्वात्र शिवभक्तानां किञ्चिच्छश्वन्महीं शुभाम्।
सार्व्वभौमो भवेद्राजा मुमुक्षुर्मोक्षमाप्नुयात् ॥ २४
महानदीजलं पुण्यं सर्व्वपापविनाशनम्।
ग्रहणे तदुपस्पृश्य मुच्यते सर्व्वपातकैः ॥ २५
अन्या च विरजा नाम नदी त्रैलोक्यविश्रुता।
तस्यां स्नात्वा नरो विप्रा ब्रह्मलोके महीयते ॥ २६
तीर्थं नारायणस्यान्यन्नाम्ना तु पुरुषोत्तमम्।
तत्र नारायणः श्रीमानास्ते परमपूरुषः ॥ २७
पूजयित्वा परं विष्णुं स्नात्वा तत्र द्विजोत्तमः।
ब्राह्मणान् पूजयित्वा तु विष्णुलोकमवाप्नुयात् ॥ २८
तीर्थानां परमं तीर्थं गोकर्णं नाम विश्रुतम्।
सर्व्वपापहरं शम्भोर्निवासः परमेष्ठिनः ॥ २९

दृष्ट्वा लिङ्गन्तु देवस्य गोकर्णेश्वरमुत्तमम् ।
ईप्सितांल्लभते कामान् रुद्रस्य दयितो भवेत् ॥ ३०
उत्तरञ्चापि गोकर्णं लिङ्गं देवस्य शूलिनः ।
महादेवञ्चार्चयित्वा शिवसायुज्यमाप्नुयात् ॥ ३१
तत्र देवो महादेवः स्थाणुरित्यभिविश्रुतः ।
तं दृष्ट्वा सर्व्वपापेभ्यस्तत्क्षणान्मुच्यते नरः ॥ ३२
अन्यत् कुब्जाश्रमं पुण्यं स्थानं विष्णोर्महात्मनः ।
सम्पूज्य पुरुषं विष्णुं श्वेतद्वीपे महीयते ॥ ३३
यत्र नारायणो देवो रुद्रेण त्रिपुरारिणा ।
कृत्वा यज्ञस्य मथनं दक्षस्य तु विसर्ज्जितः ॥ ३४
समन्ताद्योजनं चैवं सिद्धर्षिगणसेवितम् ।
पुण्यमायतनं विष्णोस्तत्रास्ते पुरुषोत्तमः ॥ ३५
अन्यत् कोकामुखं विष्णोस्तीर्थमद्भुतकर्म्मणः ।
मृतोऽत्र पातकैर्मर्त्त्यो विष्णुसारूप्यमाप्नुयात् ॥ ३६
शालग्रामं महातीर्थं विष्णोः प्रीतिविवर्द्धनम् ।
प्राणांस्तत्र नरस्त्यक्त्वा हृषीकेशं प्रपश्यति ॥ ३७
अश्वतीर्थमिति ख्यातं सिद्धावाससुपावनम् ।
आस्ते हयशिरा नित्यं तत्र नारायणः स्वयम् ॥ ३८
तीर्थं त्रैलोक्यविख्यातं (क) ब्रह्मणः परमेष्ठिनः ।
पुष्करं सर्व्वपापघ्नं मृतानां ब्रह्मलोकदम् ॥ ३९
मनसा संस्मरेद्यस्तु पुष्करं वै द्विजोत्तमः ।
पूयते पातकैः सर्व्वैः शक्रेण सह मोदते ॥ ४०
तत्र देवाः सगन्धर्व्वाः सयक्षोरगराक्षसाः ।
उपासते सिद्धसङ्घा ब्रह्माणं पद्मसम्भवम् ॥ ४१
तत्र स्नात्वा लभेच्छुद्धो ब्रह्माणं परमेष्ठिनम् ।
पूजयित्वा द्विजवर ब्रह्माणं सम्प्रपश्यति ॥ ४२
तत्राभिगम्य देवेशं पुरुहूतमनिन्दितम् ।
तद्रूपो जायते मर्त्त्यः सर्व्वान् कामानवाप्नुयात् ॥ ४३
सप्तगोदावरं तीर्थं ब्रह्माद्यैः परिसेवितम् ।
पूजयित्वा तत्र रुद्रमश्वमेधफलं लभेत् ॥ ४४
यत्र मङ्कणको रुद्रं प्रपन्नः परमेश्वरम् ।
आराधयामास हरं पञ्चाक्षरपरायणः ॥ ४५
नमः शिवायेति मुनिजपन् पञ्चाक्षरन्त्विदम् ।
आराधयामास शिवं तपसा गोवृषध्वजम् ॥ ४६
प्रजज्वालाथ तपसा मुनिर्मङ्कणकस्तदा ।
ननर्त्त हर्षवेगेण ज्ञात्वा रुद्रं समागतम् ।
तं प्राह भगवान् रुद्रः किमर्थं नर्त्तितं त्वया ॥ ४७
दृष्ट्वापि देवमीशानं नृत्यति स्म पुनःपुनः ।
सोऽन्वीक्ष्य भगवानीशः सगर्व्वं गर्व्वशान्तये ॥ ४८
स्वकं देहं विदार्य्यासौ भस्मराशिमदर्शयत् ।
पश्येनं मच्छरीरोत्थं भस्मापि त्वं द्विजोत्तम ।
माहात्म्यमेतत् तपसस्त्वादृशोऽन्योऽपि विद्यते ॥ ४९
यः सगर्व्वं हि भवता नर्त्तितं मुनिपुङ्गव ।
न युक्तं तापसस्यैतत् त्वत्तोऽप्यभ्यधिको ह्यहम् ॥ ५०
इत्याभाष्य मुनिश्रेष्ठं स रुद्रः किल विश्वदृक् ।
आस्थाय परमं भावं ननर्त्त जगतो हरः ॥ ५१
सहस्रशीर्षा भूत्वा स सहस्राक्षः सहस्रपात् ।
दंष्ट्राकरालवदनो ज्वालामाली भयङ्करः ॥ ५२
सोऽन्वपश्यदथेशस्य पार्श्वे तस्य त्रिशूलिनः ।
विशाललोचनामेकां देवीं चारुविलासिनीम् ॥ ५३
सूर्य्यायुतसमाकारां प्रसन्नवदनां शिवाम् ।
सस्मितं प्रेक्ष्य विश्वेशं तिष्ठन्तीममितद्युतिम् ॥ ५४
दृष्ट्वा सन्त्रस्तहृदयो वेपमानो मुनीश्वरः ।
ननाम शिरसा रुद्रं रुद्राध्यायं जपन् वशी ॥ ५५
प्रसन्नो भगवानीशस्त्र्यम्बको भक्तवत्सलः ।
पूर्व्ववेषं स जगृहे देवी चान्तर्हिताभवत् ॥ ५६
आलिङ्ग्य भक्तं प्रणतं देवदेवः स्वयं शिवः ।
न भेतव्यं त्वया वत्स प्राह किं ते ददाम्यहम् ॥ ५७
प्रणम्य मूर्द्ध्ना गिरिशं हरं त्रिपुरसूदनम् ।
विज्ञापयामास तदा हृष्टः प्रहृष्टमना मुनिः ॥ ५८
नमोऽस्तु ते महादेव महेश्वर नमोऽस्तु ते ।
किमेतद्भगवद्रूपं सुघोरं विश्वतोमुखम् ॥ ५९
का च सा भगवत्पार्श्वे राजमाना व्यवस्थिता ।
अन्तर्हितेव सहसा सर्व्वमिच्छामि वेदितुम् ॥ ६०
इत्युक्तो व्याजहारेशस्तदा मङ्कणकं हरः ।
महेशः स्वात्मनो योगं देवीञ्च त्रिपुरानलः ॥ ६१
अहं सहस्रनयनः सर्व्वात्मा सर्व्वतोमुखः ।
दाहकः सर्व्वपापानां कालः कालहरो हरः ॥ ६२
मयैव प्रर्य्यते विश्वं चेतनाचेतनात्मकम् ।

---

(क) इतः परं क्वचित् पुस्तके—
सिद्धावासं सुशोभनं तत्रास्ति पुण्यदं तीर्थमिति
पाददयमधिक दृश्यते ।

सोऽन्तर्यामी स पुरुषो ह्यहं वै पुरुषोत्तमः ॥ ६३
तस्य सा परमा माया प्रकृतिस्त्रिगुणात्मिका।
प्रोच्यते मुनिभिः शक्तिर्जगद्योनिः सनातनी ॥ ६४
स एष मायया विश्वं व्यामोहयति विश्ववित्।
नारायणः परोऽव्यक्तो मायारूप इति श्रुतिः॥ ६५
एवमेतज्जगत् सर्व्वं सर्व्वदा स्थापयाम्यहम्।
योजयामि प्रकृत्याहं पुरुषं पञ्चविंशकम् ॥ ६६
तथा स सङ्गतो देवः कूटस्थः सर्व्वगोऽमलः।
सृजत्यशेषमेवेदं स्वमूर्त्तेः प्रकृतेरजः ॥ ६७
स देवो भगवान् ब्रह्मा विश्वरूपः पितामहः ॥ ६८
तवैतत् कथितं सम्यक् स्रष्टृत्वं परमेष्ठिनः।
एकोऽहं भगवान् कालो ह्यनादिश्चान्तकृद्विभुः ॥ ६९
समास्थाय परं भावं प्रोक्तो रुद्रो मनीषिभिः।
ममैव सा परा शक्तिर्देवी विद्येति विश्रुता।
दृष्टो हि भवता नूनं विद्यादेहः स्वयं ततः ॥ ७०
एवमेतानि तत्त्वानि प्रधानपुरुषेश्वरः।
विष्णुर्ब्रह्मा च भगवान् रुद्रः काल इति श्रुतिः ॥ ७१
त्रयमेतदनाद्यन्तं ब्रह्मण्येव व्यवस्थितम्।
तदात्मकं तदव्यक्तं तदक्षरमिति श्रुतिः ॥ ७२
आत्मानन्दपरं तत्त्वं चिन्मात्रं परमं पदम्।
आकाशं निष्कलं ब्रह्म तस्मादन्यन्न विद्यते ॥ ७३
एवं विज्ञाय भवता भक्तियोगाश्रयेण तु।
सम्पूज्यो वन्दनीयोऽहं ततस्तं पश्य शोश्वरम् ॥ ७४
एतावदुक्त्वा भगवान् जगामादर्शनं हरः।
तत्रैव भक्तियोगेन रुद्रमाराधयन्मुनिः ॥ ७५
एतत् पवित्रमतुलं तीर्थं ब्रह्मर्षिसेवितम्।
संसेव्य ब्राह्मणो विद्वान् मुच्यते सर्व्वपातकैः ॥ ७६

इति श्रीकौर्म्मे महापुराणे उपरिभागे तीर्थोपाख्याने चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

## पञ्चत्रिंशोऽध्यायः।

सूत उवाच।

अन्यत् पवित्रं विपुलं तीर्थं त्रैलोक्यविश्रुतम्।
रुद्रकोटिरिति ख्यातं रुद्रस्य परमेष्ठिनः ॥ १
पुरा पुण्यतमे काले देवदर्शनतत्पराः।
कोटिब्रह्मर्षयो दान्तास्तं देशमगमन् परम् ॥ २
अहं द्रक्ष्यामि गिरिशं पूर्व्वमेव पिनाकिनम्।
अन्योन्यं भक्तियुक्तानां विवादोऽभून्महान् किल॥३
तेषां भक्तिं तदा दृष्ट्वा गिरिशो योगिनां गुरुः।
कोटिरूपोऽभवद्रुद्रो रुद्रकोटिस्ततः स्मृतः ॥ ४
ते स्म सर्व्वे महादेवं हरं गिरिगुहाशयम्।
पश्यन्तः पार्व्वतीनाथं हृष्टपुष्टधियोऽभवन् ॥ ५
अनाद्यन्तं महादेवं पूर्व्वमेवाहमीश्वरम्।
दृष्टवानिति भक्त्या ते रुद्रन्यस्तधियोऽभवन् ॥ ६
अथान्तरीक्षे विमलं पश्यन्ति स्म महत्तरम्।
ज्योतिस्तत्रैव ते सर्व्वे न्यलीयन्त परं पदम् ॥ ७
यतः स देवोऽध्युषितस्तीर्थं पुण्यतमं शुभम्।
दृष्ट्वा रुद्रं समभ्यर्च्य रुद्रसामीप्यमाप्नुयात् ॥ ८
अन्यच्च तीर्थप्रवरं नाम्ना मधुवनं शुभम्।
तत्र गत्वा नियमवानिन्द्रस्यार्द्धासनं लभेत् ॥ ९
अथान्या पद्मनगरी (क) देशः पुण्यतमः शुभः।
तत्र गत्वा पितॄन् पूज्य कुलानां तारयेच्छतम् ॥ १०
कालञ्जरं महातीर्थं लोके रुद्रो महेश्वरः।
कालं जरितवान् देवो यत्र भक्तप्रियो हरः ॥ ११
श्वेतो नाम शिवे भक्तो राजर्षिप्रवरः पुरा।
तदाशीस्तन्नमस्कारः पूजयामास शूलिनम् ॥ १२
संस्थाप्य विधिना लिङ्गं भक्तियोगपुरःसरः।
जजाप रुद्रमनिशं तत्र संन्यस्तमानसः ॥ १३
सितं कालोऽथ दीप्तात्मा शूलमादाय भीषणम्।
नेतुमभ्यागतो देशं स राजा यत्र तिष्ठति ॥ १४
वीक्ष्य राजा भयाविष्टः शूलहस्तं समागतम्।
कालं कालकरं घोरं भीषणं चण्डदीपितम् ॥ १५
उभाभ्यामथ हस्ताभ्यां स्पृष्ट्वासौ लिङ्गमुत्तमम्।
ननाम शिरसा रुद्रं जजाप शतरुद्रियम् ॥ १६
जपन्तमाह राजानं नमन्तमसकृद्भवम्।
एह्येहीति पुरः स्थित्वा कृतान्तः प्रहसन्निव ॥ १७
तमुवाच भयाविष्टो राजा रुद्रपरायणः।
एकमीशार्च्चनरतं विहायान्यान् स निसूदय ॥ १८
इत्युक्तवन्तं भगवानब्रवीद्भीतमानसम्।
रुद्रार्च्चनरतो वान्यो मद्वशे को न तिष्ठति ॥ १९

---

(क) पुष्पनगरीति पाठान्तरम्।

एवमुक्त्वा स राजानं कालो लोकप्रकाशनः।
बबन्ध पाश राजापि जजाप शतरुद्रियम् ॥ २०
अथान्तरीक्षे विपुलं दीप्यमानं
तेजोराशिं भूतभर्त्तुः पुराणम्।
ज्वालामालासंवृतं व्याप्य विश्वं
प्रादुर्भूतं संस्थितं सन्ददर्श ॥ २१
तन्मध्येऽसौ पुरुषं रुक्मवर्णं
देव्या देवं चन्द्रलेखोज्ज्वलाङ्गम्।
तेजोरूपं पश्यति स्मातिहृष्टो
मेने चास्मन्नाथ आगच्छतीति ॥ २२
आगच्छन्तं नातिदूरेऽथ दृष्ट्वा
कालो रुद्रं देवदेव्या महेशम्।
व्यपेतभीरखिलेशैकनाथं
राजर्षिस्तं नेतुमभ्याजगाम ॥ २३
आलोक्यासौ भगवानुग्रकर्म्मा
देवो रुद्रो भूतभर्त्ता पुराणः।
एवं भक्तं सत्वरं मां स्मरन्तं
देहीतीमं कालरूपं ममेति ॥ २४
श्रुत्वा वाक्यं गोपतेरुग्रभावः
कालात्मासौ मन्यमानः स्वभावम्।
बद्ध्वा भक्तं पुनरेवाथ पाशैः
क्रुद्धो रुद्रस्याभिदुद्राव वेगात् ॥ २५
प्रेक्ष्यायान्तं शैलपुत्रीमथेशः
सोऽन्वीक्ष्यान्ते विश्वमायाविधिज्ञः।
सावज्ञं वै वामपादेन कालं
राज्ञश्चैनं पश्यतो व्याजघान ॥ २६
ममार सोऽतिभीषणो महेशपादघातितः।
रराज देवतापतिः सहोमया पिनाकधृक् ॥ २७
निरीक्ष्य देवमीश्वरं प्रहृष्टमानसो हरम्।
ननाम साम्बमव्ययं स राजपुङ्गवस्तदा ॥ २८
नमो भवाय हेतवे हराय विश्वसम्भवे।
नमः शिवाय धीमते नमोऽपवर्गदायिने ॥ २९
नमो नमो नमोऽस्तु ते महाविभूतये नमः।
विभागहीनरूपिणे नमो नराधिपाय ते ॥ ३०
नमोऽस्तु ते गणेश्वर प्रपन्नदुःखनाशन।
अनादिनित्यभूतये वराहशृङ्गधारिणे ॥ ३१
नमो वृषध्वजाय ते कपालमालिने नमः।
नमो महानटाय ते शिवाय हे हराय ते (क) ॥ ३२
अथानुगृह्य शङ्करः प्रणामतत्परं नृपम्।
स्वगाणपत्यमव्ययं स्वरूपतामथो ददौ ॥ ३३
सहोमया सपार्षदः सराजपुङ्गवो हरः।
मुनीशसिद्धवन्दितः क्षणाददृश्यतामगात् ॥ ३४
काले महेशनिहते लोकनाथः पितामहः।
अयाचत वरं रुद्रं सजीवोऽयं भवत्विति ॥ ३५
नास्ति कश्चिदपीशान दोषलेशो वृषध्वज।
कृतान्तस्यैव भवता तत्कार्य्ये विनियोजितः ॥ ३६
स देवदेववचनाद्देवदेवेश्वरो हरः।
तथास्त्वित्याह विश्वात्मा सोऽपि तादृग्विधोऽभवत् ॥ ३७
इत्येतत् परमं तीर्थं कालञ्जरमिति श्रुतिः।
गत्वाभ्यर्च्य महादेवं गाणपत्यञ्च विन्दति ॥ ३८

इति श्रीकौर्म्मे महापुराणे उपरिभागे तीर्थोपाख्याने कालवधे पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

## षट्त्रिंशोऽध्यायः।

सूत उवाच।

इदमन्यत् परं स्थानं गुह्याद्गुह्यतरं महत्।
महादेवस्य देवस्य महालय इति श्रुतिः ॥ १
तत्र देवाधिदेवेन रुद्रेण त्रिपुरारिणा।
शिलातले पदं न्यस्तं नास्तिकानां निदर्शनम् ॥ २
तत्र पाशुपताः शान्ता भस्मोद्धूलितविग्रहाः।
उपासते महादेवं वेदाध्ययनतत्पराः ॥ ३
स्नात्वा तत्र पदं शार्व्वं दृष्ट्वा भक्तिपुरःसरम्।
नमस्कृत्वाथ शिरसा रुद्रसामीप्यमाप्नुयात् ॥ ४
अन्यच्च देवदेवस्य स्थानं शम्भोर्महात्मनः।
केदारमिति विख्यातं सिद्धानामालयं शुभम् ॥ ५
तत्र स्नात्वा महादेवमभ्यर्च्य वृषकेतनम्।
पीत्वा चैवोदकं शुद्धं गाणपत्यमवाप्नुयात् ॥ ६
श्राद्ध-दानादिकं कृत्वा ह्यक्षयं लभते फलम्।
द्विजातिप्रवरैर्जुष्टं योगिभिर्जितमानसैः ॥ ७

(क) इतः परं—"विभूतिभूषणाय ते नमो महाजटाय ते" इति पद्यार्द्धमधिकं क्वचित्।

तीर्थं प्लक्षावतरणं सर्व्वपापविनाशनम् ।
तत्राभ्यर्च्य श्रीनिवासं विष्णुलोके महीयते ॥ ८
अन्यच्च मगधारण्यं स्वर्गलोकगतिप्रदम् ।
अक्षयं विन्दते स्वर्गं तत्र गत्वा द्विजोत्तमः ॥ ९
तीर्थं कनखलं पुण्यं महापातकनाशनम् ।
यत्र देवेन रुद्रेण यज्ञो दक्षस्य नाशितः ॥ १०
तत्र गङ्गामुपस्पृश्य शुचिर्भावसमन्वितः ।
मुच्यते सर्व्वपापैस्तु ब्रह्मलोके वसेन्नरः ॥ ११
महातीर्थमिति ख्यातं पुण्यं नारायणप्रियम् ।
तत्राभ्यर्च्य हृषीकेशं श्वेतद्वीपं निगच्छति ॥ १२
अन्यच्च तीर्थप्रवरं नाम्ना श्रीपर्व्वतं शुभम् ।
अत्र प्राणान् परित्यज्य रुद्रस्य दयितो भवेत् ॥ १३
तत्र सन्निहितो रुद्रो देव्या सह महेश्वरः ।
स्नान-पिण्डादिकं तत्र दत्तमक्षय्यमुत्तमम् ॥ १४
गोदावरी नदी पुण्या सर्व्वपापप्रणाशनी ।
तत्र स्नात्वा पितॄन् देवांस्तर्पयित्वा यथाविधि ।
सर्व्वपापविशुद्धात्मा गोसहस्रफलं लभेत् ॥ १५
पवित्रसलिला पुण्या कावेरी विपुला नदी ।
तस्यां स्नात्वोदकं कृत्वा मुच्यते सर्व्वपातकैः ॥ १६
त्रिरात्रोपोषितेनाथ एकरात्रोषितेन वा (क) ।
द्विजातीनान्तु कथितं तीर्थानामिह सेवनम् ॥ १७
यस्य वाङ्मनसे शुद्धे हस्त-पादौ च संयतौ ।
अलोलुपो ब्रह्मचारी तीर्थानां फलमाप्नुयात् ॥ १८
स्वामितीर्थं महातीर्थं त्रिषु लोकेषु विश्रुतम् ।
तत्र सन्निहितो नित्यं स्कन्दोऽमरनमस्कृतः ॥ १९
स्नात्वा कुमारधारायां कृत्वा देवादितर्पणम् ।
आराध्य षण्मुखं देवं स्कन्देन सह मोदते ॥ २०
नदी त्रैलोक्यविख्याता ताम्रपर्णीति नामतः ।
तत्र स्नात्वा पितॄन् भक्त्या तर्पयित्वा यथाविधि ।
पापकर्त्तॄनपि पितॄंस्तारयेन्नात्र संशयः ॥ २१
चन्द्रतीर्थमिति ख्यातं कावेर्याः प्रभवेऽक्षयम् ।
तीर्थं तत्र भवेद्दत्तं मृतानां सद्गतिप्रदम् ॥ २२
विन्ध्यपादे प्रपश्यन्ति देवदेवं सदाशिवम् ।
भक्त्या ये ते न पश्यन्ति यमस्य वदनं द्विजाः ॥ २३

(क) इतः परं—विमुक्तः सर्व्वपापेभ्यो रुद्रलोकमवाप्नुयादित्यधिकः पाठः क्वचिद्दृश्यते ।

देविकायां वृषो नाम तीर्थं सिद्धनिषेवितम् ।
तत्र स्नात्वोदकं कृत्वा योगसिद्धिञ्च विन्दति ॥ २४
दशाश्वमेधिकं तीर्थं सर्व्वपापविनाशनम् ।
दशानामश्वमेधानां तत्राप्नोति फलं नरः ॥ २५
पुण्डरीकं तथा तीर्थं ब्राह्मणैरुपशोभितम् ।
तत्राभिगम्य युक्तात्मा पौण्डरीकफलं लभेत् ॥ २६
तीर्थेभ्यः परमं तीर्थं ब्रह्मतीर्थमिति श्रुतम् ।
ब्रह्माणमर्चयित्वात्र ब्रह्मलोके महीयते ॥ २७
सरस्वत्या विनशनं प्लक्षप्रस्रवणं शुभम् ।
व्यासतीर्थमिति ख्यातं मैनाकश्च नगोत्तमः ।
यमुनाप्रभवश्चैव सर्व्वपापविनाशनः ॥ २८
पितॄणां दुहिता देवी गन्धकालीति विश्रुता ।
तस्यां स्नात्वा दिवं यान्ति मृतो जातिस्मरो भवेत्२९
कुबेरतुङ्गं पापघ्नं सिद्ध-चारणसेवितम् ।
प्राणांस्तत्र परित्यज्य कुबेरानुचरो भवेत् ॥ ३०
उमातुङ्गमिति ख्यातं यत्र सा रुद्रवल्लभा ।
तत्राभ्यर्च्य महादेवीं गोसहस्रफलं लभेत् ॥ ३१
भृगुतुङ्गे तपस्तप्तं श्राद्धं दानं तथा कृतम् ।
कुलान्युभयतः सप्त पुनातीति मतिर्मम ॥ ३२
काश्यपस्य महातीर्थं कालसर्पिरिति श्रुतम् ।
तत्र श्राद्धानि देयानि नित्यं पापक्षयेच्छया ॥ ३३
दशार्णायां तथा दानं श्राद्धं होमस्तपो जपः ।
अक्षयञ्चाव्ययञ्चैव कृतं भवति सर्व्वदा ॥ ३४
तीर्थं द्विजातिभिर्जुष्टं नाम्ना वै कुरुजाङ्गलम् ।
दत्त्वात्र दानं विधिवद्ब्रह्मलोके महीयते ॥ ३५
वैतरण्यां महातीर्थे स्वर्णवेद्यां तथैव च ।
ब्रह्मपृष्ठे च शिरसि (क) ब्रह्मणः परमे शुभे ॥ ३६
भरतस्याश्रमे पुण्ये पुण्ये श्राद्धवने शुभे ।
महाह्रदे च कौशिक्यां दत्तं भवति चाक्षयम् ॥ ३७
मुञ्जपृष्ठे पदं न्यस्तं महादेवेन धीमता ।
हिताय सर्व्वभूतानां नास्तिकानां निदर्शनम् ॥ ३८
अल्पेनापि तु कालेन नरो धर्म्मपरायणः ।
पाप्मानमुत्सृजेदाशु जीर्णां त्वचमिवोरगः ॥ ३९
नाम्ना कनकनन्देति तीर्थं त्रैलोक्यविश्रुतम् ।
उदीच्यां मुञ्जपृष्ठस्य ब्रह्मर्षिगणसेवितम् ।

(क) धर्म्मपृष्ठे च सरसीति पाठान्तरम् ।

तत्र स्नात्वा दिवं यान्ति कुशीला वा द्विजातयः ॥४०
हृतं वापि सदा श्राद्धमक्षयं समुदाहृतम् ।
ऋणैस्त्रिभिर्नरः स्नात्वा मुच्यते क्षीणकल्मषः ॥ ४१
मानसे सरसि स्नात्वा शक्रस्यार्द्धासनं लभेत् ।
उत्तरं मानसं गत्वा सिद्धिं प्राप्नोत्यनुत्तमाम् ॥ ४२
तस्मिन् निर्व्वर्त्तयेच्छ्राद्धं यथाशक्ति यथाबलम् ।
स कामान् लभते दिव्यान् मोक्षोपायञ्च विन्दति॥४३
पर्व्वतो हिमवान् नाम नानाधातुविभूषितः ।
योजनानां सहस्राणि साशीतिस्त्वायतो गिरिः ॥४४
सिद्ध-चारणसङ्कीर्णो देवर्षिगणसेवितः ।
तत्र पुष्करिणी रम्या सुषुम्णा नाम नामतः ॥ ४५
तत्र गत्वा द्विजो विद्वान् ब्रह्महत्यां विमुञ्चति ।
श्राद्धं भवति चाक्षय्यं तत्र दत्तं महोदयम् ।
तारयेच्च पितॄन् सम्यग्दश पूर्व्वान् दशापरान् ॥ ४६
सर्व्वत्र हिमवान् पुण्यो गङ्गा पुण्या समन्ततः ।
नद्यः समुद्रगाः पुण्याः समुद्रश्च विशेषतः ॥ ४७
बदर्य्याश्रममासाद्य मुच्यते सर्व्वकिल्बिषात् ।
तत्र नारायणो देवो नरेणास्ते सनातनः ॥ ४८
अक्षयं तत्र दानं स्याज्जप्यं वापि तथाविधम् ।
महादेवप्रियं तीर्थं पावनं तद्विशेषतः ।
तारयेच्च पितॄन् सर्व्वान् दत्त्वा श्राद्धं समाहितः॥४९
देवदारुवनं पुण्यं सिद्ध-गन्धर्व्वसेवितम् ।
महता देवदेवेन तत्र दत्तं महाफलम् ॥ ५०
मोहयित्वा मुनीन् सर्व्वान् समस्तैः सम्प्रपूजितः ।
प्रसन्नो भगवानीशो मुनीन्द्रान् प्राह भावितान् ॥ ५१
इहाश्रमवरे रम्ये निवसिष्यथ सर्व्वदा ।
मद्भावनासमायुक्तास्ततः सिद्धिमवाप्स्यथ ॥ ५२
येऽत्र मामर्च्चयन्तीह लोके धर्म्मपरायणाः ।
तेषां ददामि परमं गाणपत्यं हि शाश्वतम् ॥ ५३
अत्र नित्यं वसिष्यामि सह नारायणेन तु ।
प्राणानिह नरस्त्यक्त्वा न भूयो जन्म चाप्नुयात् ॥ ५४
संस्मरन्ति च ये तीर्थं देशान्तरगता जनाः ।
तेषाञ्च सर्व्वपापाणि नाशयामि द्विजोत्तमाः ॥ ५५
श्राद्धं दानं तपो होमः पिण्डनिर्व्वपणं तथा ।
ध्यानं जपश्च नियमः सर्व्वमत्राक्षयं कृतम् ॥ ५६
तस्मात् सर्व्वप्रयत्नेन द्रष्टव्यं हि द्विजातिभिः ।
देवदारुवनं पुण्यं महादेवनिषेवितम् ॥ ५७
यत्रेश्वरो महादेवो विष्णुर्वा पुरुषोत्तमः ।
तत्र सन्निहिता गङ्गा तीर्थान्यायतनानि च ॥ ५८

इति श्रीकौर्म्मे महापुराणे उपरिभागे तीर्थो-
पाख्याने षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

## सप्तत्रिंशोऽध्यायः ।

ऋषय ऊचुः ।

कथं दारुवनं प्राप्तो भगवान् गोवृषध्वजः ।
मोहयामास विप्रेन्द्रान् सूत तद्वक्तुमर्हसि ॥ १

सूत उवाच ।

पुरा दारुवने रम्ये देव-सिद्धनिषेविते ।
सपुत्त्र-दारा मुनयस्तपश्चेरुः सहस्रशः ॥ २
प्रवृत्तं विविधं कर्म्म प्रकुर्व्वाणा यथाविधि ।
यजन्ति विविधैर्यज्ञैस्तपन्ति च महर्षयः ॥ ३
तेषां प्रवृत्तिविन्यस्त-चेतसामथ शूलभृत् ।
व्याख्यापयन् महादोषं ययौ दारुवनं हरः ॥ ४
कृत्वा विश्वगुरुं विष्णुं पार्श्वे देवो महेश्वरः ।
ययौ निवृत्तविज्ञान-स्थापनार्थञ्च शङ्करः ॥ ५
आस्थाय विपुलं वेषमूनविंशतिवत्सरः ।
लीलालसो महाबाहुः पीनाङ्गश्चारुलोचनः ॥ ६
चामीकरवपुः श्रीमान् पूर्णचन्द्रनिभाननः ।
मत्तमातङ्गगमनो दिग्वासा जगदीश्वरः ॥ ७
जातरूपमयीं मालां सर्व्वरत्नैरलङ्कृताम् ।
दधानो भगवानीशः समागच्छति सस्मितः ॥ ८
योऽनन्तः पुरुषो योनिर्लोकानामव्ययो हरिः ।
स्त्रीवेषं विष्णुरास्थाय सोऽनुगच्छति शूलिनम् ॥९
सम्पूर्णचन्द्रवदनं पीनोन्नतपयोधरम् ।
शुचिस्मितं सुप्रसन्नं रणन्नूपुरकद्वयम् ॥ १०
सुपीतवसनं दिव्यं श्यामलं चारुलोचनम् ।
उदारहंसगमनं विलासि सुमनोहरम् ॥ ११
एवं स भगवानीशो देवदारुवने हरः ।
चचार हरिणा सार्द्धं मायया मोहयन् जगत् ॥ १२
दृष्ट्वा चरन्तं विश्वेशं तत्र तत्र पिनाकिनम् ।
मायया मोहिता नार्य्यो देवदेवं समन्वयुः ॥ १३

विस्रस्तवस्त्राभरणास्त्यक्त्वा लज्जां पतिव्रताः।
सहैव तेन कामार्त्ता विलासिन्यश्चरन्ति हि ॥ १४
ऋषीणां पुत्त्रका ये स्युर्युवानो जितमानसाः।
अन्वगच्छन् हृषीकेशं सर्व्वे कामप्रपीड़िताः ॥ १५
गायन्ति नृत्यन्ति विलासयुक्ता
नारीगणा नायकमेकमीशम्।
दृष्ट्वा सपत्नीकमतीव कान्त-
मिष्टं तथालिङ्गितमाचरन्ति ॥ १६
ते सन्निपत्य स्मितमाचरन्ति
गायन्ति गीतानि मुनीशपुत्त्राः।
आलोक्य पद्मापतिमादिदेवं
भ्रूभङ्गमन्ये विचरन्ति तेन ॥ १७
आसामथैषामपि वासुदेवो
मायी मुरारिर्मनसि प्रविष्टः।
करोति भोगान् मनसि प्रवृत्तिं
मायानुभूतान् स इतीव सम्यक् ॥ १८
विभाति विश्वामरविश्वनाथः
समाधव-स्त्रीगणसन्निविष्टः।
अशेषशक्त्या समयं निविष्टो
यथैकशक्त्या सह देवदेवः ॥ १९
करोति नित्यं परमं प्रधान
तदा विरूढ़ः पुनरेव भूयः।
ययौ समारुह्य हरिः स्वभावं
तमीदृशं नाम तमादिदेवम् ॥ २०
दृष्ट्वा नारीकुलं रुद्रं पुत्त्रानपि च केशवम्।
मोहयन्तं मुनिश्रेष्ठाः कोपं सन्दधिरे भृशम् ॥ २१
अतीव परुषं वाक्यं प्रोचुर्देवं कपर्द्दिनम्।
शेपुश्च शापैर्विविधैर्मायया तस्य मोहिताः ॥ २२
तपांसि तेषां सर्व्वेषां प्रत्याहन्यन्त शङ्करे।
यथादित्यप्रतीकाशे तारका नभसि स्थिताः ॥ २३
तं भत्स्य तापसा विप्राः समेत्य वृषभध्वजम्।
को भवानिति देवेशं पृच्छन्ति स्म विमोहिताः ॥ २४
सोऽब्रवीद्भगवानीशस्तपश्चर्त्तुमिहागतः।
इदानीं भार्य्यया देशे भवद्भिरिह सुव्रताः ॥ २५
तस्य ते वाक्यमाकर्ण्य भृग्वाद्या मुनिपुङ्गवाः।
ऊचुर्गृहीत्वा वसनं त्यक्त्वा भार्य्यां तपश्चर ॥ २६
अथोवाच विहस्येशः पिनाकी नीललोहितः।
सम्प्रेक्ष्य जगतां योनिं पार्श्वस्थञ्च जनार्द्दनम् ॥ २७
कथं भवद्भिरुदितं स्वभार्य्यापोषणोत्सुकैः।
त्यक्तव्या मम भार्य्येति धर्म्मज्ञैः शान्तमानसैः ॥ २८

ऋषय ऊचुः।

व्यभिचाररता भार्य्याः सन्त्याज्याः पतिनेरिताः।
अस्माभिरेषा सुभगा तादृशी त्यागमर्हति ॥ २९

महादेव उवाच।

न कदाचिदियं विप्रा मनसाप्यन्यमिच्छति।
नाहमेनामपि तथा विमुञ्चामि कदाचन ॥ ३०

ऋषय ऊचुः।

दृष्ट्वा व्यभिचरन्तीह ह्यस्माभिः पुरुषाधम।
उक्तं ह्यसत्यं भवता गम्यतां क्षिप्रमेव हि ॥ ३१
एवमुक्ते महादेवः सत्यमेव मयेरितम्।
भवतां प्रतिभात्येषेत्युक्त्वासौ विचचार ह ॥ ३२
सोऽगच्छद्धरिणा सार्द्धं मुनीन्द्रस्य महात्मनः।
वसिष्ठस्याश्रमं पुण्यं भिक्षार्थी परमेश्वरः ॥ ३३
दृष्ट्वा समागतं देवं भिक्षमाणमरुन्धती।
वसिष्ठस्य प्रिया भक्त्या प्रत्युद्गम्य ननाम तम् ॥ ३४
प्रक्षाल्य पादौ विमलं दत्त्वा चासनमुत्तमम्।
सम्प्रेक्ष्य शिथिलं गात्रमभिघातहतं द्विजैः ॥ ३५
सन्धयामास भैषज्यैर्विषण्णवदना सती।
चकार महतीं पूजां प्रार्थयामास भार्य्यया ॥ ३६
को भवान् कुत आयातः किमाचारो भवानिति।
उच्यतामाह भगवान् सिद्धानां प्रवरो ह्यहम् ॥ ३७
यदेतन्मण्डलं शुद्धं भाति ब्रह्ममयं सदा।
एषैव देवता मह्यं धारयामि सदैव तु ॥ ३८
इत्युक्त्वा प्रययौ श्रीमाननुगृह्य पतिव्रताम्।
ताड़याञ्चक्रिरे दण्डैर्लोष्टिभिर्मुष्टिभिर्द्विजाः ॥ ३९
दृष्ट्वा चरन्तं गिरिशं नग्नं विकृतलक्षणम्।
प्रोचुरेतद्भवाँल्लिङ्गमुत्पाटय तु दुर्म्मते ॥ ४०
तानब्रवीन्महायोगी करिष्यामीति शङ्करः।
युष्माकं मामके लिङ्गे यदि द्वेषोऽभिजायते ॥ ४१
इत्युक्त्वोत्पाटयामास भगवान् भगनेत्रहा।
नापश्यंस्तत् क्षणात्तेशं केशवं लिङ्गमेव च ॥ ४२

तदोत्पाता बभूवुर्हि लोकानां भयशंसिनः ।
नाराजत सहस्रांशुश्चचाल पृथिवी पुनः ।
निष्प्रभाश्च ग्रहाः सर्व्वे चुक्षुभे च महोदधिः ॥ ४३
अपश्यच्चानसूयात्रेः स्वप्नं भार्य्या पतिव्रता ।
कथयामास विप्राणां भयादाकुलितेन्द्रिया ॥ ४४
तेजसा भासयन् कृत्स्नं नारायणसहायवान् ।
भिक्षमाणः शिवो नूनं दृष्टोऽस्माकं गृहेष्विति ॥ ४५
तस्या वचनमाकर्ण्य शङ्कमाना महर्षयः ।
सर्व्वे जग्मुर्महायोगं ब्रह्माणं विश्वसम्भवम् ॥ ४६
उपास्यमानममलैर्योगिभिर्ब्रह्मवित्तमैः ।
चतुर्व्वेदैर्मूर्त्तिमद्भिः सावित्र्या सहितं प्रभुम् ॥ ४७
आसीनमासने रम्ये नानाश्चर्य्यसमन्विते ।
प्रभासहस्रकलिले ज्ञानैश्वर्य्यादिसंयुते ॥ ४८
विभ्राजमानं वपुषा सस्मितं सुभ्रु लोचनम् ।
चतुर्म्मुखं महाबाहुं छन्दोमयमजं परम् ॥ ४९
विलोक्य देववपुषं प्रसन्नवदनं शुचिम् ।
शिरोभिर्धरणौ गत्वा तोषयामासुरीश्वरम् ॥ ५०
तान् प्रसन्नो महादेवश्चतुर्मूर्त्तिश्चतुर्म्मुखः ।
व्याजहार मुनिश्रेष्ठाः किमागमनकारणम् ॥ ५१
तस्य ते वृत्तमखिलं ब्रह्मणः परमात्मनः ।
ज्ञापयाञ्चक्रिरे सर्व्वे कृत्वा शिरसि चाञ्जलिम् ॥५२

ऋषय ऊचुः ।

कश्चिद्दारुवनं पुण्यं पुरुषोऽतीवशोभनः ।
भार्य्यया चारुसर्व्वाङ्ग्या प्रविष्टो नग्न एव हि ॥ ५३
मोहयामास वपुषा नारीणां कुलमीश्वरः ।
कन्यकानां प्रिया चास्य दूषयामास पुत्त्रकान् ॥ ५४
अस्माभिर्विविधाः शापाः प्रदत्ताश्च पराहताः ।
ताड़ितोऽस्माभिरत्यर्थं लिङ्गन्तु विनिपातितम् ॥ ५५
अन्तर्हितश्च भगवान् सभार्य्यो लिङ्गमेव च ।
उत्पाताश्चाभवन् घोराः सर्व्वभूतभयङ्कराः ॥ ५६
क एष पुरुषो देव भीताः स्मः पुरुषोत्तम ।
भवन्तमेव शरणं प्रपन्ना वयमच्युत ॥ ५७
त्वं हि वेत्सि जगत्यस्मिन् यत्किञ्चिदिह चेष्टितम् ।
अनुग्रहेण युक्तेन तदास्माननुपालय ॥ ५८
विज्ञापितो मुनिगणैर्विश्वात्मा कमलोद्भवः ।
ध्यात्वा देवं त्रिशूलाङ्कं कृताञ्जलिरभाषत ॥ ५९

ब्रह्मोवाच ।

हा कष्टं भवतामद्य जातं सर्व्वार्थनाशनम् ।
धिग्बलं धिक् तपश्चर्य्या मिथ्यैव भवतामिह ॥ ६०
सम्प्राप्य पुण्यसंस्थानां निधीनां परमं निधिम् ।
उपेक्षितं वृथाचारैर्भवद्भिरिह मोहितैः ॥ ६१
काङ्क्षन्ति योगिनो नित्यं यतन्तो यतयो निधिम् ।
यमेव तं समासाद्य हा भवद्भिरुपेक्षितम् ॥ ६२
यं समासाद्य देवानामैश्वर्य्यमखिलं ध्रुवम् ।
तमासाद्याक्षयं देवं हा भवद्भिरुपेक्षितम् (क) ॥ ६३
यमर्च्चयित्वा सततं विश्वेशत्वमिदं मम ।
स देवोपेक्षितो दृष्ट्वा निधानं भाग्यवर्ज्जिताः ॥ ६४
यस्मिन् समाहितं दिव्यमैश्वर्य्यं यत्तदव्ययम् ।
तमासाद्य निधिं ब्रह्म हा भवद्भिर्वृथाकृतम् ॥ ६५
एष देवो महादेवो विज्ञेयस्तु महेश्वरः ।
न तस्य परमं किञ्चित् पदं समधिगम्यते ॥ ६६
देवतानामृषीणां वा पितॄणाञ्चापि शाश्वतः ।
सहस्रयुगपर्य्यन्ते प्रलये सर्व्वदेहिनाम् ॥ ६७
संहरत्येष भगवान् कालो भूत्वा महेश्वरः ।
एष चैव प्रजाः सर्व्वाः सृजत्येकः स्वतेजसा ॥ ६८
एष चक्री चक्रवर्त्ती श्रीवत्सकृतलक्षणः ।
योगी कृतयुगे देवस्त्रेतायां यज्ञ एव च ।
द्वापरे भगवान् कालो धर्म्मकेतुः कलौ युगे ॥ ६९
रुद्रस्य मूर्त्तयस्तिस्रो याभिर्विश्वमिदं ततम् ।
तमो ह्यग्नी रजो ब्रह्मा सत्त्वं विष्णुरिति स्मृतिः॥७०
मूर्त्तिरन्या स्मृता चास्य दिग्वासा वै शिवा ध्रुवा ।
यत्र तिष्ठति तद्ब्रह्म योगेन तु समन्वितम् ॥ ७१
या चास्य पार्श्वगा भार्य्या भवद्भिरभिभाषिता ।
स हि नारायणो देवः परमात्मा सनातनः ॥ ७२
तस्मात् सर्व्वमिदं जातं तत्रैव च लयं व्रजेत् ।
स एष मोचयेत् कृत्स्नं स एष च परा गतिः ॥ ७३
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
एकशृङ्गो महानात्मा पुराणात्माक्षरो हरिः ॥ ७४
चतुर्व्वेदश्चतुर्म्मूर्त्तिस्त्रिगुणः परमेश्वरः ।

---

(क) "यजन्ति यज्ञैर्विविधैर्यत् प्राप्तैर्वेदवादिनः ।
महानिधिं समासाद्य हा भवद्भिरुपेक्षितम् ॥"
इति क्वचित् पाठान्तरं ।

एकमूर्त्तिरनन्तात्मा नारायण इति श्रुतिः ॥ ७५
स तस्य गर्भो भगवानापोमयतनुः प्रभुः।
स्तूयते विविधैर्मन्त्रैर्ब्राह्मणैर्मोक्षकाङ्क्षिभिः ॥ ७६
संहृत्य सकलं विश्वं कल्पान्ते पुरुषोत्तमः।
शेते योगामृतं पीत्वा यत्तद्विष्णोः परं पदम् ॥ ७७
न जायते न म्रियते वर्द्धते न च विश्वसृक्।
मूलप्रकृतिरव्यक्ता गीयते वैदिकैरजः ॥ ७८
ततो निशायां व्युष्टायां सिसृक्षुरखिलं जगत्।
अजनाभौ तु तद्बीजं क्षिपत्येष महेश्वरः ॥ ७९
तं मां वित्त महात्मानं ब्रह्माणं विश्वतोमुखम्।
महान्तं पुरुषं विश्वमपां गर्भमनुत्तमम् ॥ ८०
न तं जानीत जनकं मोहितास्तस्य मायया।
देवदेवं महादेवं भूतानामीश्वरं हरम् ॥ ८१
एष देवो महादेवो ह्यनादिर्भगवान् हरः।
विष्णुना सह संयुक्तः करोति विकरोति च ॥ ८२
न तस्य विद्यते कार्य्यं न तस्माद्विद्यते परम्।
स वेदान् प्रददौ पूर्व्वं योगमायातनुर्मम ॥ ८३
स मायी मायया सर्व्वं करोति विकरोति च।
तमेव मुक्तये ज्ञात्वा व्रजध्वं शरणं शिवम् ॥ ८४
इतीरिता भगवता मरीचिप्रमुखा विभुम्।
प्रणम्य देवं ब्रह्माणं पृच्छन्ति स्म समाहिताः ॥ ८५

मुनय ऊचुः।

कथं पश्येम तं देवं पुनरेव पिनाकिनम्।
ब्रूहि विश्वामरेशान त्राता त्वं शरणैषिणाम् ॥ ८६

ब्रह्मोवाच।

यद्दृष्टं भवता तस्य लिङ्गं भुवि निपातितम्।
तल्लिङ्गानुकृतीशस्य कृत्वा लिङ्गमनुत्तमम् ॥ ८७
पूजयध्वं सपत्नीकाः सादरं पुत्त्रसंयुताः।
वैदिकैरेव नियमैर्विविधैर्ब्रह्मचारिणः ॥ ८८
संस्थाप्य शाङ्करैर्मन्त्रैर्ऋग्यजुःसामसम्भवैः।
तपः परं समास्थाय गृणन्तः शतरुद्रियम् ॥ ८९
समाहिताः पूजयध्वं सपुत्राः सह बन्धुभिः।
सर्व्वे प्राञ्जलयो भूत्वा शूलपाणिं प्रपद्यथ ॥ ९०
ततो द्रक्ष्यथ देवेशं दुर्द्दर्शमकृतात्मभिः।
यं दृष्ट्वा सर्व्वमज्ञानमधर्म्मश्च प्रणश्यति ॥ ९१
ततः प्रणम्य वरदं ब्रह्माणममितौजसम्।
जग्मुः संहृष्टमनसो देवदारुवनं पुनः ॥ ९२
आराधयितुमारब्धा ब्रह्मणा कथितं यथा।
अजानन्तः परं भावं वीतरागा विमत्सराः ॥ ९३
स्थण्डिलेषु विचित्रेषु पर्व्वतानां गुहासु च।
नदीनाञ्च विविक्तेषु पुलिनेषु शुभेषु च ॥ ९४
शैवालभोजनाः केचित् केचिदन्तर्ज्जलेशयाः।
केचिदभ्रावकाशास्तु पादाङ्गुष्ठे ह्यधिष्ठिताः ॥ ९५
दन्तोलूखलिनस्त्वन्ये ह्यश्मकुट्टास्तथा परे।
शाकपर्णाशनाः केचित् सम्प्रक्षाला मरीचिपाः ॥ ९६
वृक्षमूलनिकेताश्च शिलाशय्यास्तथापरे।
कालं नयन्ति तपसा पूजयन्तो महेश्वरम् ॥ ९७
ततस्तेषां प्रसादार्थं प्रपन्नार्त्तिहरो हरः।
चकार भगवान् बुद्धिं प्रबोधाय वृषध्वजः ॥ ९८
देवः कृतयुगे ह्यस्मिन् शृङ्गे हिमवतः शुभे।
देवदारुवनं प्राप्तः प्रसन्नः परमेश्वरः ॥ ९९
भस्मपाण्डुरदिग्धाङ्गो नग्नो विकृतलक्षणः।
उल्मूकव्यग्रहस्तश्च रक्तपिङ्गललोचनः ॥ १००
क्वचिच्च हसते रौद्रं क्वचिद्गायति विस्मितः।
क्वचिन्नृत्यति शृङ्गारी क्वचिद्रौति मुहुर्म्मुहुः ॥ १०१
आश्रमे ह्यटते भिक्षुर्याचते च पुनःपुनः।
मायां कृत्वात्मनो रूपं देवस्तद्वनमागतः ॥ १०२
कृत्वा गिरिसुतां गौरीं पार्श्वे देवः पिनाकधृक्।
सा च पूर्व्ववद्देवेशी देवदारुवनं गता ॥ १०३
दृष्ट्वा समागतं देवं देव्या सह कपर्द्दिनम्।
प्रणेमुः शिरसा भूमौ तोषयामासुरीश्वरम् ॥ १०४
वैदिकैर्विविधैर्मन्त्रैस्तोत्रैर्माहेश्वरैः शुभैः।
अथर्व्वशिरसा चान्ये रुद्राद्यैरर्च्चयन् भवम् ॥ १०५
नमो देवाधिदेवाय महादेवाय ते नमः।
त्र्यम्बकाय नमस्तुभ्यं त्रिशूलवरधारिणे ॥ १०६
नमो दिग्वाससे तुभ्यं विकृताय पिनाकिने।
सर्व्वप्रणतदेहाय स्वयमप्रणतात्मने ॥ १०७
अन्तकान्तकृते तुभ्यं सर्व्वसंहरणाय च।
नमोऽस्तु नृत्यशीलाय नमो भैरवरूपिणे ॥ १०८
नरनारीशरीराय योगिने गुरवे नमः।
नमो दान्ताय शान्ताय तापसाय हराय च ॥ १०९
विभीषणाय रुद्राय नमस्ते कृत्तिवाससे।

नमस्ते लेलिहानाय शितिकण्ठाय ते नमः ॥ ११०
अघोरघोररूपाय वामदेवाय वै नमः ।
नमः कनकमालाय देव्याः प्रियकराय च ॥ १११
गङ्गासलिलधाराय शम्भवे परमेष्ठिने ।
नमो योगाधिपतये भूताधिपतये नमः ॥ ११२
प्राणाय च नमस्तुभ्यं नमो भस्माङ्गधारिणे ।
नमस्ते हव्यवाहाय दंष्ट्रिणे हव्यरेतसे ॥ ११३
ब्रह्मणश्च शिरोहर्त्त्रे नमस्ते कालरूपिणे ।
आगतिं ते न जानीमो गतिं नैव च नैव च ।
विश्वेश्वर महादेव योऽसि सोऽसि नमोऽस्तु ते॥११४
नमः प्रमथनाथाय दात्रे च शुभ-सम्पदाम् ।
कपालपाणये तुभ्यं नमो जुष्टतमाय ते ॥ ११५
नमः कनकपिङ्गाय वारिलिङ्गाय ते नमः ।
नमो वह्न्यर्कलिङ्गाय ज्ञानलिङ्गाय ते नमः (क)॥११६
नमो भुजङ्गहाराय कर्णिकारप्रियाय च ।
किरीटिने कुण्डलिने कालकालाय ते नमः ॥ ११७
वामदेव महेशान देवदेव त्रिलोचन ।
क्षम्यतां यत् कृतं मोहात् त्वमेव शरणं हि नः॥११८
चरितानि विचित्राणि गुह्यानि गहनानि च ।
ब्रह्मादीनाञ्च सर्व्वेषां दुर्व्विज्ञेयोऽसि शङ्कर ॥ ११९
अज्ञानाद्यदि वा ज्ञानात् किञ्चिद्‌यत् कुरुते नरः ।
तत् सर्व्वं भगवानेव कुरुते योगमायया ॥ १२०
एवं स्तुत्वा महादेवं प्रविष्टैरन्तरात्मभिः ।
ऊचुः प्रणम्य गिरिशं पश्यामस्त्वां यथा पुरा ॥ १२१
तेषां संस्तवमाकर्ण्य सोमः सोमविभूषणः ।
स्वमेव परमं रूपं दर्शयामास शङ्करः ॥ १२२
तं ते दृष्ट्वाथ गिरिशं देव्या सह पिनाकिनम् ।
यथापूर्व्वं स्थिता विप्राः प्रणेमुर्हृष्टमानसाः ॥ १२३
ततस्ते मुनयः सर्व्वे संस्तूय च महेश्वरम् ।
भृग्वङ्गिरा वशिष्ठस्तु विश्वामित्रस्तथैव च ॥ १२४
गौतमोऽत्रिः सुकेशश्च पुलस्त्यः पुलहः क्रतुः ।
मरीचिः कश्यपश्चापि संवर्त्तकमहातपाः ।
प्रणम्य देवदेवेशमिदं वचनमब्रुवन् ॥ १२५
कथं त्वां देवदेवेश कर्म्मयोगेण वा प्रभो ।
ज्ञानेन वाथ योगेन पूजयामः सदैव हि ॥ १२६
केन वा देव मार्गेण सम्पूज्यो भगवानिह ।
किं तत् सेव्यमसेव्यं वा सर्व्वमेतद्‌ब्रवीहि नः ॥ १२७

देवदेव उवाच ।

एतद्वः सम्प्रवक्ष्यामि गाढं गहनमुत्तमम् ।
ब्रह्मणा कथितं पूर्व्वमादावेव महर्षयः ॥ १२८
सांख्ययोगाद्द्विधा ज्ञेयं पुरुषाणां हि साधनम् ।
योगेन सहितं सांख्यं पुरुषाणां विमुक्तिदम् ॥ १२९
न केवलं हि योगेन दृश्यते पुरुषः परः ।
ज्ञानन्तु केवलं सम्यगपवर्गफलप्रदम् ॥ १३०
भवन्तः केवलं योगं समाश्रित्य विमुक्तये ।
विहाय सांख्यं विमलमकुर्व्वत परिश्रमम् ॥ १३१
एतस्मात् कारणाद्विप्रा नृणां केवलकर्म्मणाम् ।
आगतोऽहमिमं देशं ज्ञापयन् मोहसम्भवम् ॥ १३२
तस्माद्भवद्भिर्विमलं ज्ञानं कैवल्यसाधनम् ।
ज्ञातव्यं हि प्रयत्नेन श्रोतव्यं दृश्यमेव च ॥ १३३
एकः सर्व्वत्रगो ह्यात्मा केवलश्चितिमात्रकः ।
आनन्दो निर्म्मलो नित्य एतद्वै सांख्यदर्शनम् ॥ १३४
एतदेव परं ज्ञानमथ मोक्षोऽनुगीयते ।
एतत् कैवल्यममलं ब्रह्मभावश्च वर्णितः ॥ १३५
आश्रित्य चैतत् परमं तन्निष्ठास्तत्परायणाः ।
पश्यन्ति मां महात्मानो यतयो विश्वमीश्वरम्॥१३६
एतत् तत् परमं ज्ञानं केवलं सन्निरञ्जनम् ।
अहं हि वेद्यो भगवान् मम मूर्त्तिरियं शिवा ॥१३७
बहूनि साधनानीह सिद्धये कथितानि तु ।
तेषामभ्यधिकं ज्ञानं मामकं द्विजपुङ्गवाः ॥ १३८
ज्ञानयोगरताः शान्ता मामेव शरणं गताः ।
ये हि मां भस्मनिरता ध्यायन्ति सततं हृदि ॥ १३९
मद्भक्तितत्परा नित्यं यतयः क्षीणकल्मषाः ।
नाशयाम्यचिरात् तेषां घोरं संसारसागरम् ॥१४०
निर्म्मितं हि मया पूर्व्वं व्रतं पाशुपतं शुभम् ।
गुह्याद्गुह्यतमं सूक्ष्मं वेदसारं विमुक्तये ॥ १४१
प्रशान्तः संयतमना भस्मोद्धूलितविग्रहः ।
ब्रह्मचर्य्यरतो नग्नो व्रतं पाशुपतं चरेत् ॥ १४२
यद्वा कौपीनवसनः स्यादेकवसनो मुनिः ।

(क) इतः परं—
'विश्वेश्वर महादेव योगिन् योगिप्रियाय ते ।'
इत्यर्द्धश्लोकोऽधिकः क्वचित् ।

